


स्टंप उड़े तो क्या बोले? खेल की सच्ची शक्ति है जी

**पारले-जी**

स्वाद भरे, शक्ति भरे.

भारत के सबसे ज़्यादा बिकनेवाले बिस्किट.



Estd. 1947

# CHANDAMAMA PUBLICATIONS

## अस्माकं वाचकान् हितैषिणः च उद्दिश्य

प्रियमित्राणि !

'अस्माकं ग्राहकाः विनाक्लेशं यावत् दातुं शक्नुयुः तावत् एव मूल्यं स्यात् चन्दमामायाः' इति अस्ति अस्माकं सङ्कल्पः । एतदर्थम् एव दीर्घकालं यावत् भगीरथप्रयत्नः अस्माभिः कृतः अपि ।

यदा अस्माकम् एतादृशः प्रयत्नः सर्वथा निर्वोढुम् अशक्यः भवति तदा वयं ग्राहकाणां हितैषिणां च समीपम् अस्मत्समस्यां नयामः । अद्यावधि ते अस्मान् निराशान् न कृतवन्तः ।

गतेषु केषुचित् वर्षेषु मुद्रणसम्बन्धिनां वस्तूनां मूल्यं गगनाभिमुखं गच्छत् आसीत् । तथापि अद्यावधि वयम् एतां मूल्यवृद्धिं सोढवन्तः आस्म । किन्तु एषु दिनेषु मुद्रणकागदस्य (News print) मूल्यम् अकस्मात् यत् प्रवृद्धं तस्य कारणतः अस्माकं मासपत्रिकायाः मूल्यस्य वर्धनम् अपरिहार्यं जातम् । अतः वर्षस्यास्य नवेम्बर्मासतः भवताम् एतस्याः पत्रिकायाः प्रतिसञ्चिकं मूल्यं रू. ५.०० भविष्यति, वार्षिकं ग्राहकशुल्कं च रू. ६०.०० भविष्यति । भवन्तः अस्माकं परिस्थितिम् अवगच्छन्तः मूल्यवृद्धिं सहन्ते इति भावयामः वयम् । यदि कागदमूल्ये न्यूनता भवेत् तर्हि वयम् एतां पत्रिकाम् इतोऽपि रमणीयां वर्णरञ्जितां च करिष्यामः इति प्रतिश्रृणुमः ।

सादरं सगौरवं च अभिवन्द्य विरम्यते विस्तरात् ।

बि. विश्वनाथरेड्डी

*प्रकाशकः*

# लेखनीं क्रीत्वा आनयतु

| | |
|---|---|
| पिता - वत्स ! आपणं गत्वा आगतवान् वा भवान् ? | You had been to the shop ? |
| पुत्रः - आं तात ! गत्वा आगतवान् । | Yes Daddy. I had been. |
| पि - किमर्थम् एतावान् विलम्बः ? आपणं गत्वा शीघ्रम् आगच्छतु इति मया उक्तम् आसीत् किल ! | Why are you so late ? Had I not asked you to come back home soon ? |
| पु - आपणे महान् सम्मर्दः आसीत् तात ! | There was a heavy crowd in the shop, Daddy. |
| पि - आपणे सम्मर्दः आसीत्, उत भवान् मार्गे क्रीडन् आसीत् ? | Was there a large crowd in the shop or were you playing on your way ? |
| पु - नैव तात ! अहं मार्गे न क्रीडितवान् । आपणे बहवः क्रेतारः आसन् । | No, Daddy. I was not playing. There were a number of people making their purchases. |
| पि - भवतु । लेखनीं क्रीत्वा आनीतवान् वा ? | O.K. Did you get the pen ? |
| पु - नैव तात ! लेखनी न क्रीता मया । | No Daddy. I did not buy the pen. |
| पि - हुँ, एतावता विलम्बेन अपि लेखन्याः क्रयणं विना एव आगतवान् वा ? | What ! You came back so late and yet did not buy the pen ? |
| पु - लेखन्याः मूल्यं बहु अधिकं तात ! विंशतिरूप्यकाणि मूल्यम् इति वदति आपणिकः । मूल्यम् अधिकम् अभवत् इति भवान् वदेत् इति विचिन्त्य मया लेखनी न क्रीता । | The pen is quite costly, Daddy. The shop-keeper demanded twenty rupees for one of the pens. I did not buy it as I thought that you would say it is too much. |
| पि - अस्तु, तर्हि । इदानीं गत्वा लेखनीं क्रीत्वा आनयतु । | O.K. You go now and get the pen. |

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अददात् - Gave
अनुज्ञा - Permission
अभिज्ञातवान् - Recognised
अर्णवृक्षः - Teak
असम्मतिः - Dissent
उत्तरदायित्वम् - Responsibility
उत्पाट्य - Having pulled out
उपायनीकृतः - Was presented
उरोवेदना - Chest pain
उलूकः - Owl
ऊर्णनाभः - Spider
कटिपट्टिः - Waist Belt
कोषतः - Out of the sheath
खननम् - Digging
चित्रकः - Cheeta
च्यावितवान् - Dismissed
छदिः - Roof
जामिता - Disgust
जालम् - Net
जीवसत्त्वम् - Vitamin
प्रणीकृत्य - Betting
परम्परा - Generation
प्रभूतम् - Abundant
प्राकारः - Compound
भल्लातकी - Marking nut
भाटकार्थम् - To let
भाष्पस्थाली - Cooker
भीरुः - Coward
मतवान् - Understood
मौक्तिकम् - Pearl
यक्षिणी - A heavenly being
वटकः - A savoury item
वाटिका - Garden
वितानम् - Pandal
विमाता - Step Mother
वृन्ताकः - Brinjal
समक्षम् - In the presence of
सन्धिवेदना - Joint pain
सीमा - Border
हेषारवः - Neighing

# चन्दमामा

संस्थापकः - 'चक्रपाणिः'  सञ्चालकः - 'नागिरेड्डी'






## अनुकरणयोग्या पद्धतिः

एतेषु दिनेषु दिनपत्रिकासु शिक्षणपद्धतेः, शिक्षणबोधनक्रमस्य च परिवर्तनविषये तदा तदा वार्ताः प्रकटिताः भवन्ति । सर्वकारस्य सूचनानुसारं शालायां व्यवस्थापकाः निर्णीतवन्तः सन्ति यत् - लघुबालानां शालाप्रवेशतः पूर्वं यत् सन्दर्शनम् आयोज्यते, तत् निर्दिष्टवयोमितिपर्यन्तं परित्यक्तव्यम् इति । परिवर्तितशिक्षणपद्धतेः अनुगुणं प्राथमिकस्तरे पाठ्यपुस्तकानां टिप्पणीपुस्तकानां च उपयोगः न भविष्यति । प्रौढस्तरे अपि निश्चितपाठ्यपुस्तकानां, छात्रैः प्रतिदिनं शालां प्रति नेतव्यानां पुस्तकानां च संख्या न्यूना भविष्यति । छात्राणां शिरोवेदनाजनकः गृहपाठः न्यूनीक्रियते । तेषां पठनासक्तिं वर्धयितुं सामान्यज्ञानविषयस्य पठनार्थम् अवकाशः कल्पयिष्यते । शिक्षणक्षेत्रस्य एषा प्रगतिः आदर्शयुता सती छात्राणाम् उत्साहं वर्धयेत्, पोषकाणां च तृप्तिं जनयेत् च ।

एतस्य प्रयोगरूपेण उत्तरभारते कयाचित् विद्यासंस्थया कार्ययोजना काचित् अनुष्ठिता । एवं हि श्रूयते - दशकक्ष्याणाम् अपि यदा भवनं सिद्धं जातम्, तदनन्तरम् एव शिक्षणस्य आरम्भः जातः । एकैकस्यां कक्ष्यायाम् अपि एकः एव विभागः भवेत्, ततस्मन् विभागे एतावन्तः एव छात्राः भवेयुः इति नियमः कृतः । कक्ष्यायां पीठोपकरणानि पाठ्योपकरणानि च व्यवस्थितं स्थापितानि । अपि च शालापरतया सर्वेषाम् अपि विद्यार्थिनाम् आनयनार्थं वाहनव्यवस्था परिकल्पिता । विद्यार्थिनिलयः न आसीत् । एतस्य परिणामतः धनव्ययः न्यूनः जातः । आतङ्काः अपि परिहृताः अभवन् । प्रातःकालीनपाठानन्तरं पर्याप्तमात्रेण समयः कल्पितः । भोजनानन्तरं कञ्चन कालं यावत् विश्रम्य छात्रैः स्वकक्ष्यां गत्वा गृहपाठपरिशीलनार्थं ये अध्यापकाः नियोजिताः सन्ति, ते मेलनीयाः । गृहपाठः सर्वदा शालायाम् एव क्रियते स्म ।

'शालायाः पाठनक्रमम् एव अनुसृत्य गृहे छात्रान् बोधयितुं पोषकाः समर्थाः न भवन्ति' इति शालाव्यवस्थापकानाम् अभिप्रायः । अपि च गृहगमनानन्तरं छात्राः मातापितृभ्यां सह अधिकं समयं यापयेयुः, न तु गृहपाठविषये अवधानं दद्युः इत्यपि नूतनशिक्षणपद्धतेः आशयः ।

गृहपाठः शालायाम् एव समाप्तः । आश्चर्यं नाम छात्राः पाठ्यपुस्तकानि टिप्पणीपुस्तकानि च शालायाम् एव संस्थाप्य गृहं प्रति गतवन्तः ।

एषा नूतना शिक्षणपद्धतिः प्रयत्नेन व्यवहारे आनेतव्या इति भवन्तः अभिप्रयन्ति वा ?



सम्पुटः - ११  अक्टोबर - १९९४  सञ्चिका - ७

प्रतिकृतिमूल्यं - रू. ४.०० * वार्षिकं ग्राहकशुल्कं - रू. ४८.००



# नामनिर्वचनम् - १९

*[निर्वचनं नाम शब्दानाम् अवयवार्थस्य निरूपणम् । नामपदेन अत्र सुबन्ताः विवक्षिताः । अस्मिन् विभागे सुबन्तानाम् अवयवार्थस्य निरूपणं क्रियते । आदौ तु संज्ञाशब्दानाम् (पुरुषाणां स्त्रीणां च) अवयवार्थाः निरूप्यन्ते ।]*

**श्रीनिधिः -** श्रीः निधीयते अस्मिन्, मञ्जूषायां रत्नमञ्जरी इव इति श्रीनिधिः । महाविष्णुः इत्यर्थः । [नि + (डु) धाञ् (धारणपोषणयोः) + किः] यथा पेटिकायां रत्नगुच्छं स्थाप्यते तथा सर्वविधाः सम्पदः अस्मिन् सर्वदा निहिताः भवन्ति । अतः भगवान् महाविष्णुः श्रीनिधिः इति उच्यते । विष्णुसहस्रनाम्नः व्याख्याने एषा व्युत्पत्तिः एवं निरूप्यते - 'सर्वशक्तिमये अस्मिन् निखिलाः श्रियः निधीयन्ते इति श्रीनिधिः' इति । तथा हि निरुक्तिः - ''श्रीरस्मिन् निहिता नित्यं श्रीनिधिः परिकीर्तितः' इति ।

**शाश्वतः -** शश्वत् सर्वेषु कालेषु भवतीति शाश्वतः = विष्णुः । [शश्वत् + तत्र भवः 'अण्'] शश्वत् इति अव्युत्पन्नं प्रातिपदिकम् । विष्णुः अनवरतं जगद्व्यापारे निमग्नः भवति । सर्वेषु कालेषु विष्णोः स्थितिः भवति एव । यतः विष्णुः अनन्तः, अच्युतः च । सर्वदा सः भवति एव इत्यतः सः 'शाश्वतः' अपि । तथा हि श्रुतिः - ''शाश्वतं शिवम् अच्युतम्'' । शाश्वतशब्दस्य निरुक्तिः तावत् - ''अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः । अतः सदा प्रवाहत्वात् नित्यः शाश्वत उच्यते'' इति ।

**शिशिरः -** शिशिरशब्दस्य प्राधान्येन अर्थद्वयम् । शिशिरऋतुः, विष्णुः चेति । तत्र -

i. विष्णुः इत्यर्थे निर्वचनं तावत् - आर्तशब्दश्रवणसमनन्तरम् एव शशति = त्वरया गच्छति इति शिशिरः । [शश (प्लुतगतौ) + किरच्] विष्णोः तावत् आर्तरक्षणे झटिति प्रवृत्तिः गजेन्द्रमोक्षकथादिषु प्रसिद्धा एव । तादृशस्वभावस्य कारणतः विष्णुः शिशिरः इति उच्यते ।

ii. ऋतुविशेषार्थे निर्वचनं तावत् - शशन्ति = धावन्ति अस्मिन् पथिकाः इति शिशिरः । पथिकाः शीतबाधां सोढुम् अशक्नुवन्तः एतस्याम् ऋतौ धावन्ति । अतः एषः शिशिरः ।

शिशिरविषये कोशः तावत् - 'शिशिरः स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत्' । (विश्वः)

**सूचना -** *भवन्तः कस्यचित् नाम्नः अर्थं ज्ञातुम् इच्छन्ति चेत् कृपया लिखन्तु । निर्वचनं कृत्वा अत्र प्रकाशयिष्यामः ।*

सङ्केतः - संस्कृतचन्दमामा, 'अक्षरम्', ८ क्रास्, गिरिनगरं II फेस्, बेङ्गलूरु - ५६० ०८५.

वार्ताविशेषः -

# सहोदराणां युद्धम्




'सहोदराणां युद्धम्' इति प्रधानशीर्षिकया युक्ताः वार्तापत्रिकाः एमेन्देशस्य अन्तर्युद्धविषयं प्रकटितवत्यः दृश्यन्ते। उत्तर-दक्षिण-एमेन्देशयोः प्रजाः एव पत्रिकाभिः सहोदरत्वेन निर्दिष्टाः। उत्तर-एमेन् दक्षिण-एमेन् च वर्षचतुष्टयात् पूर्वं संयुक्तौ जातौ आस्ताम्। किन्तु तयोर्मध्ये इदानीं पुनः युद्धम् आरब्धम्। दक्षिण-एमेन्देशः स्वस्य पृथक्त्वम् एव रक्षितुम् इष्टवान्। सः स्वस्य स्वातन्त्र्यम् अघोषयत्। एतस्मात् कारणात् पुनः युद्धम् आरब्धम्। शतं दिनानि यावत् युद्धं प्राचलत्। परिणामतः बहवः मृताः।

यदा एमेन् संयुक्तराष्ट्रं जातम् तदा उत्तर-एमेन्देशीयः 'पीपल्स् जनरल् कांग्रेस्' संस्थायाः नायकः अली साले संयुक्तदेशस्य अध्यक्षः जातः। दक्षिण-एमेन्देशीयः 'एमनी सोषलिस्ट्' पक्षस्य नायकः अली सलीम् अल्बीद् संयुक्तदेशस्य उपाध्यक्षः जातः। संयुक्तदेशस्य स्थापनतः पूर्वम् उत्तर-एमेन् साम्प्रदायिकस्य इस्लांधर्मगुरोः अधीनः आसीत्। दक्षिण-एमेन्देशः तत्कालीनसोवियत् यूनियन्संस्थायाः सहकारं प्राप्तवान् इत्यतः सः सोषलिस्ट्देशः आसीत्।

१९९३ तमे वर्षे प्रथमं निर्वाचनं प्रवृत्तम्। विधानसभायाः सदस्यानां संख्या ३०१। पीपल्स् जनरल् कांग्रेस् १२१ स्थानानि प्राप्नोत्। सोषलिस्ट्पक्षः ५६ स्थानानि केवलं प्राप्नोत्। 'एमनी ग्यादरिङ्ग फार् रिफार्म्' नामकः पक्षः सोषलिस्ट्पक्षस्य अपेक्षया अपि अधिकानि स्थानानि प्राप्य पीपल्स् जनरल् कांग्रेस्संस्थायै सहकारम् अददात् इति कारणतः अली साले अध्यक्षः जातः, नूतनसर्वकारश्च रचितः। किन्तु एषः सर्वकारः संयुक्त-एमेन् देशस्य एकतां रक्षितुम् असमर्थः जातः। अध्यक्षः अली सालेमहाशयः दक्षिण-एमेन् प्रदेशस्थेषु तैलोत्पादनकेन्द्रेषु स्वकीयम् अधिकारं चालयितुं प्रयत्नं कृतवान्। एतस्य परिणामतः उभयोः प्रान्तयोः मध्ये

हिंसात्मकाः घटनाः प्रवृत्ताः । मे-मासस्य पञ्चमे दिनाङ्के उत्तर-एमेन्देशः दक्षिण-एमेन्देशस्य युद्धविमानं पातितवान् । उत्तर-एमेन् निन्दारोपणम् अकरोत् यत् - दक्षिण-एमेन् स्वविमानदलाक्रमणं कृतवान् इति । अतः अध्यक्षः सालेमहाशयः आपत्कालीनां स्थितिं घोषितवान् । उपाध्यक्षम् अलबीद्महोदयं स्थानात् निष्कासितवान् च । तैलविभागस्य रक्षणाविभागस्य च मन्त्रिणौ अपि तत्स्थानात् निष्कासितवान् सालेमहाशयः । दक्षिण-एमेन् देशस्य एडन् गवर्नर्महाशयम् अपि स्थानात् च्यावितवान् सः ।

सैन्यबलाधिक्ययुक्तः उत्तर-एमेन्देशः दक्षिण-एमेन्देशस्य उपरि आक्रमणम् अकरोत् । दक्षिण-एमेन्देशः 'स्कड्स्' सदृशानाम् आधुनिकानाम् युद्धास्त्राणां प्रयोगं कृतवान् । सः यूनियन्तः पृथग्भूय स्वस्य स्वातन्त्र्यं प्रकटीकृतवान् । सः देशः प्रकटनं कृतवान् यत् - अध्यक्षः सालेमहाशयः यदि प्रामाणिकतया व्यवहरति तर्हि एव युद्धं स्थगयितुं शक्नुमः वयम् इति । 'संयुक्त-एमेन् अनुवर्तेत चेत् एते नियमाः अङ्गीकरणीयाः' इति वदन् दक्षिण-एमेन्देशः सप्त नियमान् असूचयत् । किन्तु सालेमहाशयः एतान् नियमान् तिरस्कृतवान् ।

मासत्रयं यावत् अन्तर्युद्धं प्रवृत्तम् । मासत्रयावधौ उभयपक्षीयाः षड्वारं युद्धस्थगनम् अङ्गीकृतवन्तः । किन्तु केषुचित् एव क्षणेषु शान्तिसन्धानस्य उल्लङ्घनम् अभवत् इति परस्परं दूषयन्तौ उभौ अपि पक्षौ युद्धम् आरब्धवन्तौ । एडन् पतनम् अभवत् इति कारणतः अली सलीम् अल्बीद्, अन्ये च केचन दक्षिण-एमेन्नायकाः इदानीं यद्यपि पार्श्वदेशे आश्रयं प्राप्य जीवन्तः सन्ति , तथापि दीर्घकालं ते तटस्थाः न तिष्ठेयुः, इति राजकीयपरिशीलकानाम् अभिप्रायः । किन्तु उत्तर-एमेन्देशः प्रकटनं कृतवान् अस्ति यत् - युद्धं पूर्णतः स्थगितम् अस्ति, प्रजानाम् उद्धारार्थं हितार्थं च बहुपक्षीयं निर्वाचनं भविष्यति इति च ।

अग्रिमदिनेषु एमेन् कीदृशीं स्थितिं प्राप्नुयात् इति ऊहा अपि कष्टकरी एव ।

## एमेन्देशस्य पूर्वोत्तरम्

सुगन्धद्रव्याणाम् उत्पादनेन प्रपञ्चे एव प्रसिद्धिं गतः प्राचीनः देशः एमेन् । एमन् ओरमन् टर्किजनानां साम्राज्यस्य कश्चन भागः आसीत् । १२३९ तमे वर्षे ईस्ट् इण्डिया कम्पनी अत्र आगत्य एतं प्रदेशं स्वायत्तम् अकरोत् । एडन् केन्द्रस्थानम् अस्ति इत्यतः तेन मार्गेण याः महानौकाः सञ्चरन्ति, तासाम् उपरि आंग्लेयानाम् आधिपत्यम् आधिक्येन आसीत् । प्रथमं जागतिकं युद्धं यदा समाप्तं, तदा टर्किदेशः पराजयं प्राप्नोत् । अतः अन्ये देशाः इव एमन्देशः अपि 'अरब् रिपब्लिक् आफ् एमेन्' नाम्ना स्वस्य स्वातन्त्र्यम् अघोषयत् । १९६७ तमे वर्षे आंग्लसेना ततः निर्गता । एतदनन्तरं तत्र 'पीपल्स् फेडरेषन् आफ् सदर्न् एमेन्' संस्थायाः स्थापनम् अभवत् । १९७० तमे वर्षे शासनपदस्थेन मार्क्सिस्ट्पक्षेण तस्याः संस्थायाः नाम 'पीपल्स् डेमाक्रटिक् रिपब्लिक् आफ् एमेन्' इति परिवर्तितम् । इतः वर्षद्वयानन्तरम् उत्तर-दक्षिण-एमेन्देशयोः युद्धम् आरब्धम् । एतत् युद्धं वर्षं यावत् अनुवृत्तम् । १९७९ तमे वर्षे सन्धिः जातः । संयुक्त-एमेन्देशस्य निर्माणविषये चर्चा जाता, 'संयुक्त-एमेन् कौन्सिल्' स्थापितं च । 'सना' नगरं राजधानी जाता । संयुक्त-एमेन्देशः स्थापितः अभवत् च ।



# पिशाचैः विवाहः कारितः

कनकपुरवासी कमलाकरः नगरे उद्योगं करोति स्म। सः प्रतिदिनं प्रातः नगरं गत्वा सायं गृहं प्रत्यागच्छति स्म। कमलाकरस्य बाल्ये एव तस्य पिता दिवङ्गतः आसीत्। पितुः मरणानन्तरं तस्य माता तं कष्टेन पोषितवती आसीत्।

कमलाकरस्य कण्ठः सुमधुरः। सः सुमधुरं गायति। कदाचित् रात्रिसमये माता कमलाकरम् उक्तवती - 'गीतं गायतु' इति। कमलाकरः गायन् आसीत्। तस्मिन् समये माता पुत्रस्य गानं शृण्वती एव इहलोकं त्यक्तवती। मातुः मरणानन्तरं कमलाकरः एकाकी जातः।

प्रतिदिनं पाकादिगृहकार्यं समाप्य कमलाकरः कार्यालयं गच्छति स्म। कमलाकरस्य एतादृशीं परिस्थितिं दृष्ट्वा तस्य स्नेहिताः तं बोधितवन्तः यत् - काञ्चित् परिणीय सुखेन जीवतु इति।

विवाहविषयश्रवणमात्रेण कमलाकरस्य मनसि प्रतिवेशिनी पार्वती स्मृतिपथे आगता। पार्वती पितुः एकमात्रपुत्री। तस्याः पिता वणिक्। रूपवती पार्वती प्रतिदिनम् अपि सायङ्कालसमये तद्ग्रामस्थं देव्याः आलयं गच्छति स्म। देवालयं प्रति गमनसमये कमलाकरगृहस्य पुरतः विद्यमानायाः वाटिकातः पुष्पम् उत्पाट्य नयति स्म। एवं सत्यपि कमलाकरः कदापि पार्वत्या सह सम्भाषणं न कृतवान् आसीत्।

कदाचित् सायङ्कालसमये कमलाकरः कार्यालयतः गृहम् आगच्छन् आसीत्। गृहस्य पुरतः वाटिकायां पार्वती धैर्येण पुष्पम् उत्पाटयन्ती आसीत्। एतत् दृष्ट्वा कमलाकरः तस्याः समीपं गत्वा पृष्टवान् - ''अहं भवतीम् इच्छामि। भवती परिणेतव्या इति मम आशयः। एतद्विषये भवत्याः अभिप्रायः कः?'' इति।



कमलाकरस्य एतत् वचनं श्रुत्वा पार्वती क्षणकालम् आश्चर्यचकिता । अनन्तरं सा कोपेन उक्तवती - "भवान् समधुरं गायेत्, किन्तु खड्गग्रहणं जानाति वा भवान् ? भवतः विनयव्यवहारेण सर्वे अपि 'भवान् बुद्धिमान्' इति चिन्तयेयुः । किन्तु भवान् धनिकः न खलु ! इतःपरं कदापि एतादृशम् अविवेकपूर्णं वचनं मा वदतु माम्" इति ।

तदा कमलाकरः किमपि वक्तुम् उद्युक्तः । किन्तु पार्वती तस्य वचनं श्रोतुम् अनिच्छन्ती उत्पाटितानि पुष्पाणि अधः क्षिप्त्वा ततः वेगेन स्वगृहं गतवती ।

एतस्मात् प्रकरणात् कमलाकरः अतीव अपमानितः । तस्य जीवने एव विरक्तिः उत्पन्ना । सूर्यास्तः जातः चेदपि सः गृहे दीपं न ज्वालितवान्, अपि तु अरण्यं प्रति प्रस्थितवान् ।

कमलाकरः अरण्यं गत्वा दुःखेन कस्याश्चित् शिलायाः उपरि उपविष्टवान् । मातरं स्मरन् मातुः प्रियतमं किञ्चन गीतं गातुम् उद्युक्तः अभवत् च ।

किञ्चित्कालानन्तरं तस्य गानं समाप्तम् । तदा अरण्यस्थेभ्यः वृक्षेभ्यः त्रयः पिशाचाः करताडनं कुर्वन्तः कमलाकरसमीपम् आगत्य तम् उक्तवन्तः - "अहो ! सुमधुरं गानम् ! गीतस्य रागः कः इति अस्माभिः न ज्ञातं चेदपि गानं तु अपूर्वम् आसीत्" इति ।

जीवनात् एव विरक्तिं प्राप्तवान् कमलाकरः पिशाचानां दर्शनात् अपि किञ्चिदपि न भीतः । पिशाचाः तं परितः स्थित्वा पुनः उक्तवन्तः - "इदानीं भवता गीतं गानं यद्यपि अपूर्वम् अस्ति, तथापि तत्र काचित् दुःखच्छाया दृश्यते । अपरेण सन्तोषदायकेन गीतगानेन अस्मान् तोषयतु" इति ।

एतत् श्रुत्वा कमलाकरः दीर्घं निश्श्वसन् उक्तवान् - "मम जीवने सन्तोषः एव नास्ति । अतः शोकगीतानि विना अन्यगीतानि गातुं न शक्नोमि अहम्" इति ।

तदा पिशाचाः पृष्टवन्तः - "भवान् इतोऽपि युवकः अस्ति । इदानीम् एव किमर्थं जीवने विरक्तिः भवतः ?" इति ।

तदा कमलाकरः प्रवृत्तं सर्वं पिशाचान् निवेदितवान् ।

एतत् श्रुत्वा पिशाचाः परस्परं

समालोचनं कृत्वा कमलाकरम् उक्तवन्तः - "पार्वत्याः महान् अहम्भावः स्यात्। इतःपरं विवाहविषये भवान् चिन्तां मा करोतु। एतद्विषये वयं चिन्तयामः। भवान् इतः नगरं गच्छतु इदानीम्। आगामिपूर्णिमादिने पुनः अत्र आगच्छतु" इति।

पिशाचानां वचनेषु कमलाकरस्य यद्यपि विश्वासः न आसीत्, तथापि सः तेषां वचनानुसारं नगरं गतवान्।

अनन्तरदिने सायङ्कालसमये पार्वती देवालयं गत्वा गृहं प्रत्यागच्छन्ती आसीत्। तदा शशं कञ्चित् अनुसरन्तौ व्याघ्रः चित्रकः च तेन मार्गेण आगतवन्तौ। शशः गुल्मप्रदेशेषु धावन् पलायितः। तदा व्याघ्रः चित्रकः च उच्चैः गर्जन्तौ आक्रमणार्थं पार्वत्याः समीपम् आगतवन्तौ। एतस्मात् भीता पार्वती क्रन्दनं कुर्वती भयेन नेत्रे निमीलितवती। क्षणद्वयान्तरं नेत्रे उन्मीलितवती सा तत्रत्यं दृश्यं दृष्ट्वा अत्यन्तम् आश्चर्यम् अनुभूतवती।

पुरतः कमलाकरः तीक्ष्णं खड्गं कोषे स्थापयन् आसीत्। खड्गप्रहारेण व्रणितौ व्याघ्रचित्रकौ कमलाकरस्य पुरतः पतितौ मरणावस्थायाम् आस्ताम्।

एतत् सर्वं दृष्ट्वा पार्वती चिन्तितवती यत् - कमलाकरः 'महायोधः' इति। सा कमलाकरं कृतज्ञतां वक्तुम् उद्युक्ता। किन्तु कमलाकरः तया सह सम्भाषणं कर्तुम् अनिच्छन् ततः अदृश्यः जातः।

अकस्मात् उपस्थिता आपत् सुलभतया परिहृता इति विचिन्त्य पार्वती दीर्घं निश्श्वस्य गृहं प्रति प्रस्थिता।

पार्वत्याः गमनानुक्षणं शशस्य चित्रकस्य





कमलाकरस्य च वेषं धृतवन्तः पिशाचाः स्वरूपं प्राप्य - 'प्रथमः प्रयत्नः सफलः जातः' इत्यतः सन्तोषेण उच्चैः हसितवन्तः ।

अनन्तरदिने पार्वती देव्याः आलयतः प्रत्यागमनसमये मार्गपार्श्वे नूतनतया निर्मितं भवनं दृष्ट्वा आश्चर्यचकिता । तावता भवनतः कमलाकरः बहिः आगत्य तत्र स्थितान् कर्मकरान् किमपि उक्त्वा भवनस्य अन्तः गतवान् । एतत् दृष्ट्वा पार्वती महता आश्चर्येण कर्मकराणां समीपं गत्वा तान् पृष्टवती - ''एतत् भवनं कस्य ?'' इति ।

तदा ते कर्मकराः उक्तवन्तः - ''एतत् कमलाकरस्य भवनम्'' इति ।

एतत् श्रुत्वा आश्चर्येण पार्वती पृष्टवती - ''एकदिनाभ्यन्तरे एव कथम् एतत् भवनं निर्मितम् ?'' इति ।

पार्वत्याः प्रश्नं श्रुत्वा असमाधानं प्रकटयन्तः ते कर्मकराः पार्वतीम् उद्दिश्य - ''कमलाकरस्य चातुर्यं बुद्धिमत्ता च ये जानन्ति, ते एतादृशान् असम्बद्धान् प्रश्नान् न पृच्छन्ति'' इति उक्त्वा अन्तः गतवन्तः ।

''किमिदम् ? सर्वम् अपि विचित्रम् इव भाति'' इति स्वगतं वदन्ती पार्वती स्वगृहं गतवती ।

तस्मात् प्रदेशात् पार्वत्याः गमनस्य अनुक्षणम् एव भवनम् अदृश्यं जातम् । कमलाकरवेषधारी कर्मकरवेषधारिणः च पिशाचाः स्वरूपं प्राप्य 'द्वितीयः प्रयत्नः अपि यशस्वी' इति चिन्तयन्तः आनन्देन नृत्यं कृतवन्तः ।

तस्यां रात्रौ पार्वती कमलाकरस्य धैर्यसाहसं तस्य धनिकतां च चिन्तयन्ती एव शयनं कृतवती । सर्वथा निद्रां न प्राप्तवती च । तस्याः मनः कमलाकरविषयम् एव चिन्तयति स्म ।

अनन्तरदिने पार्वती आलस्यकारणतः देवालयं न गतवती । सायङ्कालसमये सा कमलाकरगृहस्य पुरतः विद्यमानां वाटिकां गतवती । तदा त्रयः पिशाचाः अपि सुन्दरयुवतिवेषेण तत्र आगतवन्तः ।

ताः दृष्ट्वा पार्वती साश्चर्यं पृष्टवती - ''भवत्यः काः ?'' इति ।

तदा युवतिवेषधारिणः पिशाचाः पार्वतीम् उद्दिश्य - ''अस्माकं तिसृणाम् अपि कमलाकरे अतीव अनुरागः अस्ति । 'अस्मासु

तिसृषु भवान् याम् इच्छति, तां परिणयतु' इति कमलाकरं प्रार्थयितुं वयम् अत्र आगताः स्मः। एतत् गृहं कमलाकरस्य एव खलु !'' इति पृष्टवन्तः।

एतत् श्रुत्वा पार्वती पृष्टवती - ''एतत् गृहं कमलाकरस्य एव। किन्तु सः इदानीं गृहे नास्ति। मम कश्चन सन्देहः अस्ति। सुन्दर्यः भवत्यः सामान्यरूपवन्तं कमलाकरम् इच्छन्ति खलु ! अत्र कारणं किम् ?'' इति।

तदा त्रिषु प्रथमः तरुणीवेषधारी पिशाचः उच्चस्वरेण हसन् उक्तवान् - ''अविवेकिनी भवती केवलं सौन्दर्यं पश्यति वा ? मम अग्रजायाः पतिः प्रभूतं धनं स्वीकृत्य तां परिणीतवान्। यद्यपि सः अतीव सुन्दरः। किन्तु यानात् पतित्वा सः ...।''

तावता पार्श्वे एव स्थितः अन्यः तरुणीवेषधारी पिशाचः उक्तवान् - ''सः विषयः इदानीम् अप्रस्तुतः। मम सख्याः गौर्याः स्थितिः का जाता इति न जानन्ति खलु भवत्यः ! सा भूस्वामिनः सुन्दरं पुत्रं स्वेच्छया परिणीतवती। किन्तु सः धूमपानं करोति। सर्वदा गौरीं निन्दति पीडयति च। इतोऽपि ...।''

तावता तृतीयः सुन्दरीवेषधारी पिशाचः द्वितीयस्य सम्भाषणं स्थगयन् उक्तवान् - ''सायङ्कालसमये तस्य दुष्टस्य स्मरणं मास्तु। मम मातृभगिन्याः पौत्री कीदृशीं स्थितिं प्राप्तवती इति शृण्वन्तु तावत्। तस्याः पतिः दृढकायः। तस्य शरीरसम्पदं दृष्ट्वा सा तम् इष्टवती। किन्तु विवाहानन्तरं सः पत्नीं शुनकवत् पालयन् अस्ति। अन्यत्र ...।''

एतत् सर्वं श्रुत्वा पार्वती जामितां



प्रकटयन्ती तान् उक्तवती - "भवतीनां कथनस्य तात्पर्यं तावत् - कमलाकरः सुन्दरः न चेदपि गुणवान् इति खलु ! भवतीनाम् आगमनं विलम्बेन जातम्। यतः कमलाकरस्य विवाहः निश्चितः अस्ति" इति।

"कया सह तस्य विवाहः निश्चितः अस्ति ?" इति तरुणीवेषधारिणः पिशाचाः पृष्टवन्तः।

तदा पार्वती - "कमलाकरः मयि अनुरागवान् अस्ति । अतः सः माम् एव परिणेष्यति। भवत्यः इदानीं गन्तुम् अर्हन्ति" इति उक्त्वा ततः निर्गतवती।

'अस्माभिः यथा चिन्तितं तथैव प्रवृत्तं सर्वम् अपि। इदानीं पार्वत्याः मनः परिवृत्तम् अस्ति । सा कमलाकरस्य परिणयम् अङ्गीकृतवती' इति ज्ञात्वा त्रयः पिशाचाः अपि उलूकरूपेण स्वशरीरं परिवृत्य उच्चैः शब्दं कुर्वन्तः अरण्यं गतवन्तः।

अनन्तरपूर्णिमारात्रौ त्रयः अपि पिशाचाः अरण्ये पूर्वं कमलाकरेण यत्र मिलितम् आसीत् तत् स्थलं गतवन्तः । तत्र कमलाकरेण सह पार्वती अपि आसीत् । पार्वतीं दृष्ट्वा पिशाचाः चिन्तितवन्तः यत् - अस्माकं कपटनाटकम् एषा ज्ञातवती। अतः अस्मान् दण्डयितुम् एषा आगता स्यात् इति।

पिशाचानाम् एतं भावं ज्ञात्वा पार्वती मन्दहासपूर्वकं पिशाचान् उक्तवती - "मम अहम्भावम् अविवेकं च निवारितवन्तः भवन्तः । मया तृणीकृतः कमलाकरः गुणवान् इति मां बोधितवद्भ्यः भवद्भ्यः कृतज्ञतां समर्पयितुम् आगतवती अस्मि अहम्" इति।

पार्वत्याः एतत् वचनं श्रुत्वा पिशाचाः समाधानं प्राप्य उक्तवन्तः - "इदानीं वयम् अतीव सन्तुष्टाः स्मः। इदानीं नवदम्पतीभ्यां सुमधुरेण गानेन वयं तोषणीयाः" इति।

अनुक्षणं कमलाकरः पार्वती च गानम् आरब्धवन्तौ । सुमधुरं गानं शृण्वन्तः पिशाचाः आनन्देन करताडनं कुर्वन्तः नृत्यं कृतवन्तः।





# कीर्तिसिंहकथा - ४

(जयवर्मणा दत्तं पत्रं जयसिंहः पठितवान् । तस्मिन् पत्रे अपूर्वः हारः कुत्र अस्ति इति विषयः गूढशैल्या निरूपितः आसीत् । जयवर्मा तां गूढशैलीम् अवगन्तुं न शक्तवान् । एवमेव पञ्च परम्पराः अतीताः । अनन्तरकालीनः राजा सुषेणः इष्टवान् यत् - सः अपूर्वः हारः पुत्रेण कीर्तिसिंहेन प्राप्तव्यः इति । अपूर्वहारप्राप्त्यर्थं जयसेनस्य पुत्र्याः शक्तिसेनायाः बुद्धिचातुर्यम् उपयोक्तव्यम् इति चिन्तितवान् सुषेणः । तस्मिन् एव समये काम्बोजराजः गरुडदत्तः, नगदेशराजः नागकर्णः, चावलदेशराजः कुण्डिनवर्मा च कुतन्त्रं कृतवन्तः यत् - अपूर्वहारः कोसलश्च कथमपि वशीकरणीयः इति । गुरुकुलात् प्रस्थाय आगच्छतः कीर्तिसिंहस्य बन्धनार्थं त्रयः अपि उपायं चिन्तितवन्तः । अनन्तरम् ...)

अत्र कोसलात् शक्तिसेनायाः प्रस्थानसमये एव गरुडदत्तेन तस्य मित्रेण च प्रेरिताः त्रयः भटाः काम्बोजतः प्रस्थिताः ।

'शक्तिसेना मध्येमार्गं मेलिष्यति' इति विषयं न जानाति कीर्तिसिंहः । कृष्णचन्द्रस्य गुरुकुले स्वकीयं विद्याभ्यासं समाप्य स्वदेशं प्रति गमने उत्सुकः आसीत् कीर्तिसिंहः । गुरुकुलात् तस्य प्रस्थानदिनं कृष्णप्रतिपत् । तस्मिन् दिने उषसि एव उत्थाय कीर्तिसिंहः गुरुं कृष्णचन्द्रं प्रणम्य तस्य अनुग्रहं प्राप्तवान् । अनन्तरं च सः निश्चिते मुहूर्ते भानुमतीनामिकाम् उत्तमाश्वाम् आरुह्य प्रस्थितवान् ।

किञ्चित्कालानन्तरं कीर्तिसिंहः पर्वतप्रान्तस्थं कञ्चित् अरण्यप्रदेशं प्राप्तवान् । तस्मात् प्रदेशात् उत्तरदिशि प्रयाणं कृतं चेत्



कोसलराजधानी प्राप्यते । पूर्वदिशि प्रयाणं कृतं चेत् कोसलस्य पूर्वसीमा, ततश्च अग्रे शक्तिदेवालयः, ततोऽपि अग्रे गम्यते चेत् काम्बोजराज्यं च प्राप्यते । तावत्पर्यन्तम् अपि वायुवेगेन प्रयाणं कृतवती भानुमती तं प्रदेशं प्राप्य अकस्मात् स्थितवती ।

भानुमती आदिनं क्षणकालस्य अपि विश्रान्तिं विना वायुवेगेन प्रयाणं कर्तुं समर्था । तादृशी भानुमती हठात् वेगं स्थगितवती, अग्रे गमने असम्मतिं प्रदर्शितवती च । एतस्मात् कीर्तिसिंहः आश्चर्यचकितः । तस्य सन्देहः अपि उत्पन्नः । अनुक्षणं कीर्तिसिंहः अश्वात् अवतीर्य अवलोकितवान् यत् - समीपे कुत्रापि क्रूरमृगात् भीतिः स्यात् वा इति । तादृशं सन्देहास्पदं चिह्नं कुत्रापि न दृष्टं कीर्तिसिंहेन ।

अनन्तरं कीर्तिसिंहः 'अत्रैव मम काचित् विपत् समुपस्थिता' इति चिन्तयित्वा भानुमतीम् उद्दिश्य - "भानुमति ! या कापि आपत् उपस्थिता भवतु । अहं सम्मुखीकरोमि । भवती धैर्येण अग्रे गच्छतु" इत्युक्त्वा भानुमतीम् आरोढुम् उद्युक्तः । किन्तु भानुमती अग्रे गन्तुम् अनिच्छन्ती हेषारवम् अकरोत् ।

तदा कीर्तिसिंहः - "भवतु । तर्हि किञ्चिद्दूरं पादाभ्याम् एव गच्छाव" इति भानुमतीं वदन् कोषतः खड्गं निष्कास्य सावधानम् अग्रे गतवान् । भानुमती कीर्तिसिंहम् अनुसृतवती । उभौ अपि किञ्चिद्दूरं गतवन्तौ ।

तस्मिन् समये शिरसः उपरिष्टात् वायुवेगेन आगच्छतः कस्यचन वस्तुनः शब्दं श्रुत्वा कीर्तिसिंहः उपरि दृष्टवान् । कीर्तिसिंहः यत्र स्थितवान् आसीत्, तस्मिन् प्रदेशे कश्चन महान् वटवृक्षः आसीत् । तस्मात् वटवृक्षात् क्रूरमृगाणां ग्रहणार्थं भिल्लैः उपयुज्यमानम् अयसः जालं महता वेगेन कीर्तिसिंहम् उद्दिश्य एव आगच्छत् अस्ति । कीर्तिसिंहः शब्दं श्रुत्वा यावत् उपरि दृष्टवान्, तावति काले जालं कीर्तिसिंहस्य शिरस्पर्शम् अकरोत् । कीर्तिसिंहः तत्क्षणे खड्गेन जालस्य वेगं स्थगयन्, तत् जालं पार्श्वे नुदन् झटिति पार्श्वे स्थितवान् । कीर्तिसिंहम् अनुसृत्य आगच्छन्त्याः भानुमत्याः उपरि जालं

पतितम् । जाले पतिता भानुमती बहिः आगन्तुं न शक्तवती ।

अकस्मात् प्रवृत्तया एतया घटनया कीर्तिसिंहः दिग्भ्रान्तः । तथापि सः क्षणाभ्यन्तरे एव आत्मानं निगृह्य कटौ विद्यमानां छुरिकां स्वीकृत्य वटवृक्षम् उद्दिश्य क्षेप्तुम् उद्युक्तः । तावता अन्यस्मात् प्रदेशात् वृक्षे बाणवृष्टिः एव आरब्धा । तेषां बाणानां प्रहारं सोढुम् अशक्ताः त्रयः भटाः वृक्षात् अधः पतिताः, मृताः च ।

एतत् दृष्ट्वा कीर्तिसिंहः आश्चर्यचकितः । अनन्तरं सः खड्गं गृहीत्वा परितः पश्यन् उच्चस्वरेण पृष्टवान् - ''कः तत्र ?'' इति ।

तस्य प्रश्नस्य उत्तरं किमपि न आगतम् । किन्तु पुरस्तात् गुल्मप्रदेशात् कश्चित् युवकः अग्रे आगत्य कीर्तिसिंहं नमस्कृतवान् ।

युवकस्य सविनयं व्यवहारं दृष्ट्वा कीर्तिसिंहः तं युवकं पृष्टवान् - ''कः भवान् ? मृताः एते के ?'' इति ।

तदा युवकः सविनयम् उक्तवान् - ''मृताः एते के इति अहं न जानामि । परिशीलनेन चिह्नं किमपि लभ्येत'' इति ।

अनन्तरं कीर्तिसिंहः मौनं भानुमतीसमीपं गत्वा तां जालात् उन्मोचितवान् । ततश्च शत्रुभटानां वस्त्राणि शोधयितुम् उद्युक्तः अभवत् । तस्मिन् समये, अन्ये केऽपि आक्रमणं कुर्युः इति भावनया युवकः खड्गं गृहीत्वा रक्षणार्थं सिद्धः सन् कीर्तिसिंहस्य पार्श्वे एव स्थितवान् आसीत् ।

त्रयाणाम् अपि भटानां वस्त्रशोधनेन कीर्तिसिंहः ज्ञातवान् यत् - त्रिषु एकः काम्भोजदेशीयः, द्वितीयः चाक्यदेशीयः,





तृतीयश्च नगदेशीयः इति । कोसल-काम्बोजदेशयोर्मध्ये बहोः कालात् शत्रुत्वम् अस्ति इति विषयं जानाति स्म कीर्तिसिंहः । अतः इदानीं कीर्तिसिंहः ज्ञातवान् - 'ते त्रयः अपि देशाः सम्भूय कोसलविषये कुतन्त्रं किमपि आचरन्तः सन्ति' इति।

अनन्तरं कीर्तिसिंहः युवकम् उद्दिश्य पृष्टवान् - ''इदानीं वदतु - कः भवान् ?'' इति।

तदा युवकः गाम्भीर्येण विनयेन च उक्तवान् - ''भवतः प्रश्नस्य उत्तरम् अनन्तरं कथयामि। तत्पूर्वं मम प्रश्नस्य उत्तरं वदतु'' इति।

एतत् श्रुत्वा कीर्तिसिंहः साश्चर्यं युवकं पश्यन् उक्तवान् - ''कः प्रश्नः ? वदतु'' इति।

तदा युवकः शिरः किञ्चित् अवनमय्य पृष्टवान् - ''आकाशस्य राजा राज्ञी च कौ ?'' इति।

एतं प्रश्नं श्रुत्वा कीर्तिसिंहः युवकं सूक्ष्मं परिशीलयन् 'शक्तिसेने !' इति मन्दस्वरेण आहूतवान्।

तदा युवकवेषधारिणी शक्तिसेना उक्तवती - ''मम प्रश्नस्य उत्तरम् एतत् न'' इति।

एतत् श्रुत्वा कीर्तिसिंहस्य मुखे मन्दहासः। तस्मिन् समये सः बाल्ये प्रवृत्तां घटनां स्मृतवान् । पूर्वं कार्तिकमासस्य पूर्णिमायां मात्रा सह कार्तिकदीपोत्सवं गतवती आसीत् शक्तिसेना । कीर्तिसिंहः अपि मात्रा सह तं दीपोत्सवं प्रति गतवान् आसीत्। तत्र उत्सवे आकाशे प्रकाशमानानां बहूनां नक्षत्राणां मध्ये विराजमानं चन्द्रं दृष्ट्वा आनन्दातिरेकेण शक्तिसेना उक्तवती आसीत् - ''आकाशः कियत्सुन्दरः ! नदीजले प्लवमानानां दीपानाम् अपेक्षया आकाशस्थानि नक्षत्राणि एव अत्यन्तं सुन्दराणि । भूमौ महाराजत्वप्राप्त्यपेक्षया अपि आकाशस्य महाराजपदवीप्राप्तिः इतोऽपि प्रियतमा । कीर्तिसिंह ! भवान् आकाशस्य राजा भवितुं शक्नोति वा ?'' इति।

तदा कीर्तिसिंहः एवम् उक्तवान् आसीत् - ''शक्तिसेने ! अहम् अवश्यम्

आकाशस्य राजा भविष्यामि । भवतीं च आकाशस्य महाराज्ञीं करिष्यामि'' इति।

कीर्तिसिंह-शक्तिसेनयोः परस्परं सम्भाषणं श्रुत्वा तयोः मातरौ आनन्देन हसितवत्यौ आस्ताम्।

पूर्वतनम् एतां घटनां स्मृत्वा कीर्तिसिंहः चिन्तितवान् - 'पूर्वतनः अनुरागः इदानीम् अपि अस्ति वा न वा इति परीक्षितुम् एव शक्तिसेना पृष्टवती यत् - आकाशस्य राजा राज्ञी च कौ इति' इति।

अनन्तरं कीर्तिसिंहः मन्दहासपूर्वकं शक्तिसेनासमीपं गत्वा ताम् उद्दिश्य - ''आकाशस्य राजा कीर्तिसिंहः । राज्ञी शक्तिसेना । एवं ननु ? मम उत्तरं युक्तं खलु ?'' इति पृष्टवान्।

एतत् श्रुत्वा शक्तिसेना अङ्गीकारपूर्वकं शिरः चालयन्ती लज्जया शिरः अवनमय्य स्थितवती।

क्षणकालानन्तरं कीर्तिसिंहः शक्तिसेनां पृष्टवान् - ''किमर्थम् एतेन वेषेण भवती अत्र आगतवती ?'' इति।

तदा शक्तिसेना - ''भवतः पिता महाराजः एव माम् अत्र प्रेषितवान्'' इति वदन्ती प्रवृत्तं सर्वं निवेद्य स्ववक्षे गोपितां दन्तपेटिकां निष्कास्य कीर्तिसिंहाय दत्तवती।

अनन्तरं कीर्तिसिंहः गाम्भीर्येण चिन्तयन् उक्तवान् - ''भवती एतया दन्तपेटिकया सह आगच्छति इति वार्तां ज्ञात्वा भवत्याः उपरि आक्रमणार्थम् एते भटाः अपि आगतवन्तः



स्युः किल !'' इति।

तदा शक्तिसेना उक्तवती - ''मम प्रस्थानविषयम् एते प्रायः न जानन्ति स्म । यतः महाराजः त्वरया मम प्रयाणं निश्चितवान् आसीत्'' इति।

एतत् श्रुत्वा कीर्तिसिंहः - ''एवम् अपि स्यात् । मम बन्धनद्वारा मम प्राणान् पणीकृत्य अपूर्वं हारं वशीकर्तुं प्रयत्नं कृतवन्तः स्युः एते। कारणं तु किमपि स्यात् नाम । अस्मिन् कुतन्त्रे त्रयः अपि देशाधिपतयः भागभागिनः इति तु सुस्पष्टम्। इदानीम् अस्माकं समयः अत्यल्पः अस्ति । एते त्रयः अपि भटाः मम बन्धनं कृत्वा पूर्वनिश्चिते समये गम्यं स्थलं न प्राप्तवन्तः इति कारणतः एतत्पक्षीयाः



पुनरपि अवश्यं मम अन्वेषणं करिष्यन्ति । अतः यावच्छीघ्रं कार्यं समाप्य आवाभ्याम् इतः नगरं गन्तव्यम्'' इति उक्त्वा पेटिकातः पत्रं निष्कास्य क्षणकालं पठितवान् । अनन्तरं च शक्तिसेनां पृष्टवान् - ''परमेश्वरी कं शरणं गच्छति ?'' इति ।

तदा शक्तिसेना मन्दहासपूर्वकम् उक्तवती - ''पुनरपि प्रश्नं पठतु । परमेश्वरी अपि काचित् स्त्री । स्त्री कं शरणं गच्छति ? पतिं खलु ? अतः निश्चितं यत् परमेश्वरी परमेश्वरं शरणं गच्छति इति'' इति ।

''एवं तर्हि अग्रिमं सुलभतया ज्ञायते । परमेश्वरस्य वासस्थानम् उत्तरदिशि भवति । मानवानां जीवनाधारम् आहारं पञ्चभूतेषु अन्यतमा भूमिः ददाति । पादपरिमाणेन समग्रायाः भूम्याः मापनं कुर्वता वामनेन पादत्रयपरिमिता भूमिः प्रार्थिता'' इति उक्तवान् कीर्तिसिंहः ।

तदा शक्तिसेना कीर्तिसिंहम् उद्दिश्य - ''एते अंशाः सुलभतया ज्ञातुं शक्यन्ते कीर्तिसेन ! किन्तु समस्या एषा यत् - एतेषाम् अंशानाम् आधारेण सः अपूर्वहारः कुत्र अस्ति इति कथं ज्ञातुं शक्यते इति'' इति उक्तवती ।

शक्तिसेनायाः वचनं श्रुत्वा कीर्तिसिंहः क्षणकालं विचिन्त्य उक्तवान् - ''शक्तिसेने ! एतेभ्यः अंशेभ्यः ऊह्यते यत् - हारः शक्तिदेवालये उत्तरस्यां दिशि भूमौ पादत्रयपरिमिते गर्ते गुप्तरूपेण स्थापितः स्यात् इति'' इति ।

एतत् श्रुत्वा शक्तिसेनायाः मुखं प्रसन्नं जातम् ।

अनन्तरं कीर्तिसिंहः - ''शक्तिसेने ! गच्छाव । सूर्यास्ताभ्यन्तरे शक्तिदेवालयः प्राप्तव्यः आवाभ्याम्'' इति वदन् अश्वम् आरुह्य प्रस्थितः ।

शक्तिसेना अपि तस्य वचनम् अङ्गीकृत्य अश्वम् आरुह्य कीर्तिसिंहम् अनुसृतवती । उभौ अपि वेगेन अग्रे गतवन्तौ ।

अन्धकारप्रसारतः पूर्वम् एव ताभ्यां शक्तिदेवालयः प्राप्तः । उभौ अपि अश्वात् अवतीर्य देवालयं प्रविष्टवन्तौ । तस्मिन् देवालये देव्याः पूजा न प्रचलति स्म, सः प्रदेशः निर्जनश्च आसीत् इति कारणतः सः देवालयः स्वच्छः न आसीत्, अपि तु

धूलियुक्तः ऊर्णनाभजालैः युक्तः च आसीत्। देवालयस्य प्राकारेषु लताः गुल्मरूपेण प्रवृद्धाः आसन्।

शिथिलावस्थायां स्थितं, नितराम् अस्वच्छं च तं देवालयं दृष्ट्वा कीर्तिसिंहः शक्तिसेना च अत्यन्तं खिन्नौ।

अनन्तरं कीर्तिसिंहः शक्तिसेनया आनीतया कुञ्चिकया देवालयस्य मुखद्वारम् उद्घाट्य अन्तः गतवान्। शक्तिसेना अपि कीर्तिसिंहम् अनुसृतवती। देवालयस्य गर्भगृहप्रदेशे कृष्णवर्णीयः शक्तिविग्रहः दृष्टः ताभ्याम्। शक्तेः नासिकाप्रदेशे वज्रमयं नासाभरणं कान्त्या प्रकाशमानम् आसीत्। शक्तिसेना कीर्तिसिंहः च भक्तिपूर्वकं शक्तिविग्रहं नमस्कृतवन्तौ।

कीर्तिसिंहः शक्तिं प्रार्थितवान् - "अम्ब ! करुणासागरे ! न्यायरूपेण या सम्पत्तिः मदीया भवेत्, तदर्थम् अत्र आगतवान् अस्मि अहम्। सम्पत्तिः मदीया चेदपि तस्य फलस्य विनियोगं प्रजानां हितार्थम् एव करिष्यामि इति भवत्याः पुरतः प्रतिज्ञां कुर्वन् अस्मि। मम योग्यतायाः विषये मम अपेक्षया भवती एव सम्यक् जानाति। मयि भवत्याः विश्वासः अस्ति चेत् तदेव मम महत् सौभाग्यम् इति भावयामि। ततोऽपि अधिकं किमपि भवतीतः न अभिलषामि अहम्। अस्मिन् कार्ये मम जयः भवेत्, उत अपजयः इति भवती एव निर्णयं करोतु" इति।

अनन्तरं कीर्तिसिंहः शक्तिसेना च देवालयस्य उत्तरभागं प्रति गतवन्तौ। तत्र कश्चित् बिल्ववृक्षः आसीत्।

कीर्तिसिंहः बिल्ववृक्षं परिशीलयन् शक्तिसेनाम् उक्तवान् - "शक्तिसेने ! पश्यतु। महाशिवस्य अत्यन्तं प्रीतिदायकः वृक्षः बिल्ववृक्षः। अपूर्वः हारः अत्रैव कुत्रापि निक्षिप्तः स्यात्" इति।

एतत् श्रुत्वा शक्तिसेना पृष्टवती - "भवतः चिन्तनं सम्यक् एव स्यात्। किन्तु खननसाधनं किमपि न आनीतवन्तौ खलु आवाम् ? अतः खननं कथं करवाव ?" इति।

(आगामिन्यां सञ्चिकायां समाप्तिः।)





# यक्षिण्याः अनुग्रहः

'वेतालवहनार्थम् एव ब्रह्मणा अहं सृष्टः' इति चिन्तयन् इव त्रिविक्रमः पुनरपि वृक्षसमीपं गतवान्। शाखायां लम्बमानं शवं स्कन्धे आरोप्य श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत् - "अये राजन् ! मध्यरात्रसमये भवता राजभवने सुखेन निद्रा करणीया आसीत्। किन्तु भवान् वृथा अत्र परिश्रमं कुर्वन् अस्ति। एतत् दृष्ट्वा मम मनः अतीव खिद्यते। न केवलं तावत्, स्वार्थिभिः एव युक्तः एषः प्रपञ्चः भवतः परिश्रमं ज्ञातुं शक्नुयात् वा न वा इति मम सन्देहः अस्ति अपि। स्वार्थिनः नीतिनियमादिकं विस्मृत्य व्यवहरन्ति इति विषयं भवान् जानाति एव। तथापि इतोऽपि जागरूकतया भवितव्यं भवता इति अंशं स्मारयितुं वैशाली-शिवचन्द्रयोः कथां श्रावयामि। शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा -

राजा महादत्तः विशालदेशं पालयति

## वेतालकथा



स्म । तस्य एकमात्रपुत्री वैशाली । महादत्तः पुत्रीं वैशालीं सर्वविधाः विद्याः अपि पाठितवान् । यदा वैशाली प्राप्तवयस्का जाता, तदा सा 'रूपवती' इति, 'बुद्धिमती' इति च ख्यातिं प्राप्तवती । वैशाल्याः सौन्दर्येण बुद्धिमत्तया च आकृष्टाः विविधदेशानां राजकुमाराः तां परिणेतुम् इच्छन्तः स्वभावचित्राणि महादत्ताय प्रेषितवन्तः ।

राजा महादत्तः कदाचित् राजकुमाराणां पञ्चषाणि भावचित्राणि पुत्र्यै दत्त्वा उक्तवान् - ''एतानि दृष्ट्वा भवती स्वाभिप्रायं वदतु'' इति ।

वैशाली तानि भावचित्राणि दृष्ट्वा मुखे असन्तोषं प्रकटीकुर्वती पितरं महादत्तम् उक्तवती - ''तात ! विशालदेशस्य भावी राजा जन्मतः एव गुणवान् रूपवान् धीरश्च भवेत् इति मम आशयः । एतेषु चित्रेषु ये राजकुमाराः सन्ति, तेषां मुखे यः विनयः, यत् सौन्दर्यं च दृश्यते सः सहजः न, अपि तु कृत्रिमः इति भाति'' इति ।

वस्तुतः ते राजकुमाराः वीराः इति प्रसिद्धिं प्राप्तवन्तः आसन् । तादृशानां विषये पुत्र्याः अभिप्रायं श्रुत्वा महादत्तः आश्चर्यचकितः । तथापि पुत्र्याः मनसः खेदः न करणीयः इति विचिन्त्य तदा मौनम् आश्रितवान् राजा ।

एवं स्थिते कदाचित् काचित् वार्ता आगता यत् - विशालदेशस्य उत्तरभागस्थे केसरपर्वतारण्ये ब्रह्मराक्षसी काचित् अटन्ती तत्रत्यान् गिरिजनान् खादति इति ।

अनन्तरं केषुचित् एव दिनेषु गिरिजनानां नायकः महाराजस्य महादत्तस्य समीपम् आगत्य उक्तवान् - ''महाराज ! अस्माकं वसतिप्रदेशसमीपे अरण्यभागे निवसन्ती ब्रह्मराक्षसी पुरतः यः लभ्यते, तं हस्तेन गृहीत्वा किमपि प्रश्नद्वयं पृच्छति । यः प्रश्नस्य समाधानं वक्तुम् अशक्तः तं खादित्वा गच्छति'' इति ।

तदा महाराजः पृष्टवान् - ''तया पृच्छ्यमानं प्रश्नद्वयं किम् इति जानाति वा भवान् ?'' इति ।

एतत् श्रुत्वा गिरिजननायकः उक्तवान् - ''दूरतः एव ब्रह्मराक्षसीं दृष्टवन्तः सन्ति अस्मदीयाः । किन्तु प्रश्नद्वयं किम् इति न जानन्ति ते । 'मम प्रश्नस्य समाधानं यः वदति

तं त्यजामि' इति ब्रह्मराक्षसी यत् वदति तत् स्पष्टं श्रुतवन्तः सन्ति अस्मदीयाः'' इति।

तदा महादत्तः - ''भवतु। चिन्तां मा करोतु। तां ब्रह्मराक्षसीं निवारयितुम् अहं प्रयत्नं करोमि। भवन्तः जागरूकाः भवन्तु'' इति उक्त्वा गिरिजननायकं प्रेषितवान्।

अनन्तरं महाराजः मन्त्रिणा सह समालोचनं कृत्वा समग्रे देशे प्रकटनं कारितवान् यत् - यः ब्रह्मराक्षसीं मारयिष्यति, तस्मै देशस्य कश्चन भूभागः पारितोषिकरूपेण दीयते इति।

बहूनि दिनानि अतीतानि। ब्रह्मराक्षस्याः समीपं गतं चेत् मरणं निश्चितम् एव इति भीत्या केऽपि अग्रे न आगताः। एतेन महादत्तस्य आतङ्कः दिने दिने वर्धते स्म। तेषु एव दिनेषु शिवचन्द्रनामकः युवकः ब्रह्मराक्षसीं सम्मुखीकर्तुम् इच्छन् महाराजस्य महादत्तस्य अनुज्ञां प्राप्तुम् आगतवान्।

महादत्तः शिवचन्द्रं पृष्टवान् - ''ब्रह्मराक्षसी कीदृशं प्रश्नं पृच्छति इति न जानीमः वयम्। किन्तु सा अत्यन्तं क्रूरा, बलवती च इति श्रूयते। भवान् कां विद्यां जानाति?'' इति।

तदा शिवचन्द्रः उक्तवान् - ''महाराज! अहं कामपि विद्यां न जानामि। कृषिकार्यं मम वृत्तिः'' इति।

शिवचन्द्रस्य वचनं श्रुत्वा राजा महता खेदेन उक्तवान् - ''भवान् कामपि विद्यां न जानाति। वीरः अपि न। एवं तर्हि भवान् धैर्येण कथं वा ब्रह्मराक्षसीं सम्मुखीकर्तुं



समर्थः भवेत्? पारितोषिकं प्राप्तव्यम् इति आशया प्राणत्यागं मा करोतु'' इति।

तदा शिवचन्द्रः सविनयम् उक्तवान् - ''महाराज! पारितोषिकप्राप्त्याशया सर्वथा अहं न आगतवान्। ब्रह्मराक्षसीतः गिरिजनाः रक्षणीयाः इति एकेन एव कारणेन अहम् आगतवान् अस्मि। चन्द्रस्वामिनामकः मद्ग्रामीणः महाज्ञानी मम साहाय्यार्थं मया सह आगमिष्यति। कृपया अनुमतिं ददातु इति भवन्तं प्रार्थयामि अहम्'' इति।

युवकस्य शिवचन्द्रस्य वचनगाम्भीर्यम् आत्मविश्वासं च दृष्ट्वा तस्य विषये महाराजस्य आदरः उत्पन्नः। राजा शिवचन्द्राय अनुमतिं दत्तवान्। एतस्मात्



अतीव सन्तुष्टः शिवचन्द्रः सभाभवनात् बहिः गत्वा प्रवृत्तं सर्वं चन्द्रस्वामिने निवेदितवान्।

राज्ञा अङ्गीकृतम् इति ज्ञात्वा चन्द्रस्वामी शिवचन्द्रम् उक्तवान् - ''शिवचन्द्र ! अहम् इदानीम् एव वदन् अस्मि । अहम् अरण्यस्य बहिर्भागे एव उपविशामि'' इति।

''तथैव भवतु । इदानीं गच्छाव वा ?'' इति पृच्छन् शिवचन्द्रः ततः प्रस्थितः।

राजभटाः चन्द्रस्वामिनं शिवचन्द्रं च केसरारण्यं प्रापय्य प्रतिगतवन्तः। अनन्तरं चन्द्रस्वामी अरण्यस्थान् गगनचुम्बिवृक्षान् भीत्या पश्यन् - ''शिवचन्द्र ! अहम् अत्रैव उपविशामि। इतःपरम् एकं पदम् अपि अग्रे न आगच्छामि'' इति वदन् तत्रैव उपविष्टवान्। तावता तत्र कश्चित् युवकः आगतवान् । 'अहं विशालदत्तः' इति शिवचन्द्रम् उद्दिश्य स्वपरिचयं वदन् सः उक्तवान् - ''भवान् ब्रह्मराक्षसीं कथं मारयिष्यति इति द्रष्टुम् आगतवान् अस्मि अहम् । भवतः मित्रेण सह अहम् अत्रैव उपविशामि'' इति।

एतत् श्रुत्वा शिवचन्द्रः महता सन्तोषेण विशालदत्तम् उद्दिश्य - ''एषः मम स्नेहितः चन्द्रस्वामी महान् पण्डितः अस्ति। राक्षसी यं प्रश्नं पृच्छति, तद्विषये मम साहाय्यार्थम् एषः आगतवान् अस्ति । भवन्तौ अत्रैव उपविशताम् । अहम् अरण्यस्य अन्तः गच्छामि'' इति उक्त्वा ततः प्रस्थितवान्।

शिवचन्द्रः अरण्ये किञ्चिद्दूरं गतवान् । तावता कस्यचित् वृक्षस्य पृष्ठभागात् महान् हासः श्रुतः । महतः हासस्य श्रवणतः शिवचन्द्रः भीतः । झटिति कृष्णवर्णीया राक्षसी शिवचन्द्रसमीपं गत्वा तं मुष्ट्या गृहीत्वा उन्नीतवती।

क्षणकालानन्तरं शिवचन्द्रः धैर्येण राक्षस्याः मुखं परिशीलनपूर्वकं दृष्टवान् । 'राक्षस्याः मम हस्ते पतितः अपि कश्चित् मनुष्यः भयेन क्रन्दनम् अकुर्वन् परिशीलनपूर्वकं माम् एव पश्यन् अस्ति' इति ज्ञातवत्याः राक्षस्याः महदाश्चर्यम्।

अनन्तरं राक्षसी शिवचन्द्रम् उक्तवती - ''भयङ्करीं मां दृष्ट्वा अपि भीतः न जातः भवान् । एवं तर्हि भवान् मन्दमतिः असहायशूरः वा स्यात् इति भाति मम । भवान् यो वा को वा भवतु । तेन मम न

कोऽपि लाभः । मम प्रश्नस्य उत्तरं वदतु'' इति ।

तदा शिवचन्द्रः धैर्येण पृष्टवान् - ''के ते प्रश्नाः ?'' इति ।

''भूमौ दृश्यमाना प्रत्यक्षदेवता का ?'' इति पृष्टवती राक्षसी ।

तदा शिवचन्द्रः पृष्टवान् - ''एषः एकः एव प्रश्नः, उत अन्ये अपि सन्ति ?'' इति ।

एतत् श्रुत्वा राक्षसी - ''अपरः अपि प्रश्नः अस्ति । अपराधिनं जनं दण्डयित्वा दण्डनकारणात् एव पश्चात्तापं का अनुभवति ?'' इति पृष्टवती ।

राक्षस्याः प्रश्नद्वयम् अपि श्रुत्वा शिवचन्द्रः क्षणकालं विचिन्त्य - ''उत्तरकथनात् पूर्वं मम कश्चन आशयः अस्ति'' इति उक्तवान् ।

एतत् श्रुत्वा राक्षसी आश्चर्येण - ''किं तत् ?'' इति पृष्टवती ।

तदा शिवचन्द्रः दैन्येन उक्तवान् - ''एतस्य अरण्यस्य सीमाप्रदेशे मम उभौ प्राणस्नेहितौ स्तः । सकृत् तयोः मुखदर्शनं कृत्वा अनन्तरम् आगत्य भवत्याः प्रश्नस्य उत्तरं वदिष्यामि । मम उत्तरं यदि तृप्तिकरं स्यात्, तर्हि पुनरपि तौ पश्येयम् । नो चेत् ...'' इति ।

धैर्येण सम्भाषणं कुर्वतः शिवचन्द्रस्य प्रामाणिकतां दृष्ट्वा राक्षसी अतीव सन्तुष्टा । सा - ''नीतिमान् मनुष्यः धैर्यवान् एव भवति । वञ्चकाः सदापि भीरवः एव भवन्ति । भवान् पुनरपि प्रत्यागमिष्यति इति विश्वासेन भवन्तं प्रेषयामि'' इति वदन्ती



शिवचन्द्रं भूमौ अवतारितवती ।

अनन्तरं शिवचन्द्रः ततः धावन् चन्द्रस्वामिसमीपं गत्वा राक्षस्या उक्तं प्रश्नद्वयम् उक्त्वा 'शीघ्रम् उत्तरं वदतु' इति उक्तवान् ।

तदा चन्द्रस्वामी उक्तवान् - ''भूमौ प्रत्यक्षतया दृश्यमाना देवता माता'' इति ।

''द्वितीयस्य प्रश्नस्य उत्तरं किम् ?'' इति पृष्टवान् शिवचन्द्रः ।

तदा चन्द्रस्वामी उक्तवान् - ''अपराधिनं दण्डयन्ती खेदं च अनुभवन्ती दयामयी व्यक्तिः राजा स्यात्'' इति ।

चन्द्रस्वामिनः एतत् वचनं श्रुत्वा पार्श्वे एव उपविष्टः विशालदत्तः उक्तवान् - ''द्वितीयस्य प्रश्नस्य उत्तरं 'राजा' न, अपि तु



जन्मदात्री माता एव । शिशुः यदा दोषं करोति, तदा तस्य हितार्थम् एव तं दण्डयन्ती माता अत्यन्तं खेदम् अनुभवति'' इति ।

एतत् श्रुत्वा शिवचन्द्रः राक्षस्याः समीपं गतवान् । प्रत्यागतं शिवचन्द्रम् अभिमानपूर्वकं पश्यन्ती राक्षसी उक्तवती - 'इदानीं मम प्रश्नस्य उत्तरं वदतु' इति ।

शिवचन्द्रः राक्षस्याः प्रश्नद्वयस्य अपि उत्तरम् उक्तवान् । एतत् श्रुतवत्याः राक्षस्याः मुखे अवर्णनीयः आनन्दः दृष्टः । अपरक्षणे एव ब्रह्मराक्षसी अदृश्या जाता, तस्मिन् स्थाने काचित् देवतास्त्री दृष्टिगोचरा जाता ।

एतत् दृष्ट्वा शिवचन्द्रः आश्चर्यचकितः । आश्चर्येण पश्यन्तं शिवचन्द्रं दृष्ट्वा सा देवता मन्दहासपूर्वकम् उक्तवती - ''शिवचन्द्र ! अहं यक्षिणी अस्मि । मम नाम विद्युत्प्रभा । शापकारणतः अहं राक्षसी अभवम् । शतवर्षेभ्यः पूर्वम् अस्मिन् एव प्रदेशे पुण्डरीकनामकः मुनिवर्यः आसीत् । पत्न्याः मरणानन्तरं सः त्रिवर्षीयां पुत्रीं वात्सल्येन पालयन् जीवति स्म । तेषु एव दिनेषु कदाचित् विहारार्थम् एतं प्रदेशम् आगता अहं पुण्डरीकस्य सौन्दर्येण आकृष्टा सती तं प्रार्थितवती यत् - मां परिणयतु इति । किन्तु सः मम प्रार्थनां तिरस्कृतवान् । तस्मात् कुपिता अहं चिन्तितवती - 'तस्य पुत्रीं भाययित्वा तं वशीकरोमि' इति । तदनुसारम् अहं राक्षसीवेषेण गत्वा वाटिकायां विहरन्तीं तस्य पुत्रीं गृहीतवती । मां दृष्ट्वा भीता तस्य पुत्री क्रन्दनं कुर्वती मम हस्तात् अधः पतितवती । पुत्र्याः क्रन्दनं श्रुत्वा धावन् आगतः पुण्डरीकः वस्तुस्थितिं ज्ञात्वा मां शप्तवान् यत् - भवती येन रूपेण मम पुत्रीं भायितवती, तत् एव रूपं भवत्याः शाश्वतं भवतु इति । तस्य शापात् दुःखिता अहं शापविमोचनार्थं पुण्डरीकं सविनयं प्रार्थितवती । मम प्रार्थनया तस्मिन् किञ्चिदिव करुणा उत्पन्ना । अनन्तरं सः माम् उक्तवान् - ''विद्युत्प्रभे ! वस्तुतः स्त्रीणां मनः अत्यन्तं मृदु भवति । किन्तु भवत्यां तत् नास्ति । स्वशिशुः यदा दोषं करोति, तदा तस्य हितार्थं तं दण्डयन्ती, तथा दण्डनीयम् आपतितम् इति कारणतः अन्तरङ्गे या दुःखम् अनुभवति सा स्त्री । न केवलं तावत्, प्रपञ्चे प्रत्यक्षतया दृश्यमाना देवता अपि स्त्री

एव । इदानीं भवत्याः शापविमोचनार्थम् उपायं वदामि, शृणोतु । अद्य आरभ्य शत वर्षाणि यावत् भवती राक्षसीरूपेण एव जीवति । अनन्तरं च इदानीं मया स्त्रीविषये यत् उक्तं, तदेव भवती प्रश्नद्वयरूपेण प्रक्ष्यति । यः समाधानकरम् उत्तरं दास्यति, तस्य दर्शनेन भवती शापात् विमुक्ता भविष्यति इति । एषः मम पूर्ववृत्तान्तः । अहं भवन्तं यत् प्रश्नद्वयं पृष्टवती तदेव पुण्डरीकमुनिना उक्तम्'' इति ।

आश्चर्येण एतत् सर्वं श्रुत्वा शिवचन्द्रः यक्षिणीं नमस्कृत्य उक्तवान् - ''अम्ब ! मया प्रश्नस्य यत् समाधानम् उक्तं, तत् स्वचिन्तनेन न । अहं विद्याविहीनः अस्मि'' इति ।



शिवचन्द्रस्य वचनं श्रुत्वा यक्षिणी मन्दहासं प्रकटयन्ती - ''यक्षिणी अहम् एतं विषयं दिव्यदृष्ट्या एव अवगन्तुं शक्नोमि'' इति उक्तवती । अनन्तरं सा ''वत्स ! शिवचन्द्र ! सर्वाणि अपि शास्त्राणि भवान् ज्ञास्यति । यक्षकुले जातानाम् अणिममहिमादयः अष्ट सिद्धयः यथा सहजाः भवन्ति, तथैव भवान् अपि सहजतया एव ताः सिद्धीः प्राप्स्यति'' इति शिवचन्द्रम् आशिषा अनुगृह्णती ततः अदृश्या अभवत् ।

एतस्मात् अतीव सन्तुष्टः शिवचन्द्रः अरण्यतः बहिः गत्वा प्रवृत्तं सर्वं विशालदत्तं चन्द्रस्वामिनं च निवेदितवान् ।

शिवचन्द्रस्य वचनं श्रुत्वा चन्द्रस्वामी - ''भवान् इदानीं महावीरः जातः अस्ति । इतःपरं मम आवश्यकता नास्ति भवतः'' इति कोपेन उक्त्वा ततः निर्गतवान् ।

तदा विशालदत्तः शिवचन्द्रम् उद्दिश्य - ''सः चन्द्रस्वामी स्वार्थी, असूयापरश्च । तस्य व्यवहारेण भवान् खिन्नः मा भवतु'' इति वदन् श्रीगन्धमणिभिः युक्तं हारं शिवचन्द्राय दत्त्वा उक्तवान् - ''श्रीगन्धमणिः दर्शनेन अतीव सामान्यः इव भासते । किन्तु तस्य सुगन्धः तु अपूर्वः । श्रीगन्धमणेः भवतः च महत् साम्यम् अस्ति । एषः हारः मम स्मरणार्थं भवतः समीपे एव भवतु'' इति ।

एतत् श्रुत्वा शिवचन्द्रः क्षणकालं विचिन्त्य उक्तवान् - ''चन्द्रस्वामिनः स्वार्थभावनायाः असूयायाः च कारणम् ऊहितुं शक्यते । किन्तु राजकुमारि ! भवती

मां सादरं यत् पश्यन्ती अस्ति, तस्य गूढार्थः न ज्ञायते किल !'' इति।

तदा विशालदत्तवेषधारिणी राजकुमारी वैशाली लज्जया शिरः अवनमय्य - ''इदानीम् अहम् अतीव श्रान्ता अस्मि । राजधानीं गच्छामि'' इति उक्त्वा ततः गतवती । अनन्तरं शिवचन्द्रः ततः राजधानीं गत्वा राज्ञः महादत्तस्य सत्कारं प्राप्य महाराजस्य आशयानुसारं वैशालीं परिणीतवान् ।

वेतालः एवं कथां समाप्य उक्तवान् - ''राजन् ! ये राजकुमाराः प्रसिद्धिं प्राप्तवन्तः आसन्, तेषु एव दोषं दृष्टवती वैशाली । एवं सति यक्षिणीतः वरं प्राप्तवन्तं शिवचन्द्रं किमर्थं परिणीतवती सा ? अत्र कारणं तस्याः स्वार्थः एव खलु ! अपि च सा आत्मनः दोषं गोपयन्ती शिवचन्द्रम् उक्तवती - 'चन्द्रस्वामी स्वार्थी' इति । यक्षिणीतः वरं प्राप्तवान् शिवचन्द्रः वैशाल्याः स्वार्थम् अवश्यं ज्ञातवान् एव स्यात् । तथापि सः ताम् एव परिणीतवान् इत्यस्य तात्पर्यं महाराजपदवी प्राप्तव्या इति स्वार्थभावना तस्मिन् अस्ति इति खलु ? एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''वैशाली पितरम् उक्तवती आसीत् यत् - विशालदेशस्य युवराजः रूपवान् भवेत् इति । तन्नाम बाह्यरूपेण केवलं सुन्दरः स्यात् इति न, अपि तु अन्तरङ्गतः सः रूपवान् स्यात् इति । अत्र तस्याः स्वार्थः कोऽपि नास्ति । शिवचन्द्रः अपि गिरिजनानां रक्षणार्थं प्राणान् अपि पणीकृत्य अग्रे आगतवान् । न केवलं तावत्, आत्मनः नैतिकबलेन प्रामाणिकतया च सः यक्षिण्याः कृपापात्रं जातः । तादृशं पुरुषं या कापि परिणेतुं सिद्धा भवेत् एव । वैशाल्याः आन्तर्यम्, आदरपूर्वकं व्यवहारं च दृष्ट्वा अतीव सन्तुष्टः शिवचन्द्रः तां परिणेतुम् इष्टवान् । अतः तौ स्वार्थिनौ न'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः वेतालः ततः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान् ।



# चन्दमामानुबन्धः - ७०






## अर्णवृक्षः

गृहस्य मुखद्वारम्, द्वाराणि, वातायनानि, उत्पीठिकाः, आसन्दाः इत्यादयः सामान्यतः अधिकमूल्ययुतेन अर्णकाष्ठेन निर्मीयन्ते । गृहोपकरणानां निर्माणार्थम् अत्यन्तं श्रेष्ठं काष्ठं नाम - अर्णकाष्ठम् । ल्याटिन्भाषया अर्णं 'टेक्टोनाग्राण्डिस्' इत्युच्यते । 'टेक्टान्' ग्रीक्शब्दस्य रूपान्तरभूतं पदम् । 'टेक्टान्' इत्यस्य अर्थः काष्ठकर्मकरः तक्षकः इति । 'ग्राण्डिस्' इत्यस्य अर्थः 'बृहत्' इति । 'ग्राण्डिस्' इत्यस्य 'स्थूलम्' इत्यपि अर्थः अस्ति । वृक्षेषु एव उन्नततमः स्थूलतमः च वृक्षः अर्णः । सम्यक् प्रवृद्धस्य अर्णवृक्षस्य औन्नत्यम् ३० तः ६० मीटर् भवति । केचन अर्णवृक्षाः ६० मीटर् अपेक्षया अपि उन्नतं वर्धन्ते ।

अर्णवृक्षस्य चतस्रः शाखाः भवन्ति । शाखासु ६० से. मीटर् दैर्घ्ययुतानि ३० से. मीटर् वैशाल्ययुतानि च एतस्य पर्णानि परस्परम् अभिमुखानि भवन्ति +- अर्णसस्यस्य पर्णानि अतीव विशालानि भवन्ति । पर्णानाम् उपरिभागः रूक्षः अधोभागश्च धूसरवर्णीयः मृदुश्च भवति । यथा यथा अर्णसस्यं वर्धते तथा तथा पर्णानां वैशाल्ये न्यूनता दृश्यते । शाखानाम् अग्रभागेषु लम्बाकारकाणि श्वेतवर्णीयानि पुष्पाणि गुच्छरूपेण विकसितानि भवन्ति । नवेम्बर्मासस्य जनवरीमासस्य च मध्यावधौ पर्णानि पतन्ति । वृक्षः पर्णहीनः च दृश्यते ।

अर्णवृक्षवर्धनेन महान् लाभः अस्ति । अर्णकाष्ठम् अतीव बलयुतम्, अधिककालं जीवति च । अतः एव धूमशकटस्य अङ्गानां निर्माणार्थं, नौकानां निर्माणार्थं च अर्णकाष्ठम् उपयुज्यते । महाराष्ट्रस्थायाः कार्लानामिकगुहायाः छदिनिर्माणार्थम् उपयुक्तम् अर्णकाष्ठं सहस्रद्वयवर्षपूर्वतनम् । किन्तु इदानीम् अपि तत् काष्ठं यथापूर्वम् अस्ति इत्यनेनैव स्पष्टं भवति यत् - अर्णकाष्ठं सुदीर्घकालं जीवति इति ।

भारतस्य उत्तरभागेषु अपि अर्णवृक्षाः वर्धन्ते । किन्तु तदपेक्षया केरलप्रदेशेषु कर्णाटकप्रदेशेषु च वर्धमानाः अर्णवृक्षाः अतीव श्रेष्ठतमाः । बर्मादेशीयाः अर्णवृक्षाः अत्युत्तमजातीयाः इति ख्याताः ।

# सुप्रसिद्धाः मतग्रन्थाः



## जेन्द्-अवेस्ताग्रन्थः

सप्तमे शतके पर्षियादेशीयाः इरानदेशीयाः च केचन पार्सिजनाः वासार्थं भारतदेशम् आगतवन्तः। तदारभ्य ते भारतम् एव स्वमातृभूमिं भावयन्तः तस्य अभिवृद्ध्यर्थं परिश्रमं च कुर्वन्तः देशस्य विभिन्नभागेषु निवसन्तः सन्ति।

पार्सिजनाः सुप्रसिद्धेन धर्मगुरुणा जरतुष्ट्रेण (जोराष्टर्) बोधितं 'जोराष्ट्रियन्' मतम् अनुसरन्ति । इतिहासकाराः अभिप्रयन्ति यत् - जरतुष्ट्रः क्रिस्तस्य अपेक्षया अपि सहस्रवर्षेभ्यः पूर्वं जीवितवान् स्यात् इति। जरतुष्ट्रः कस्मिंश्चित् पर्वतशिखरे एकान्तजीवनं यापयन् आसीत् । सः पर्वतः कदाचित् अग्नेः आहुतिः अभवत् । तदा जरतुष्ट्रः ततः जनानां समीपम् आगत्य प्रजाः बोधयन् ताः सन्मार्गे प्रेरितवान्।

जरतुष्ट्रेण बोधिताः विषयाः जेन्द्-अवेस्ताग्रन्थे सन्ति । पूर्वतनकाले एकविंशतिः अवेस्ताग्रन्थाः आसन् । बहवः ग्रन्थाः कालप्रवाहे नाशं गताः।

एवं हि श्रूयते - ''यदा जरतुष्ट्रः जन्म प्राप्तवान्, तदा तं परितः तीक्ष्णा कान्तिः प्रकाशिता । जन्मसमनन्तरं सः रोदनं न कृतवान्, अपि तु मन्दहासं प्रकटितवान् । बाल्ये अपि जरतुष्ट्रः सदा हसन्मुखः एव तिष्ठति स्म । यः कोऽपि तं हासस्य कारणं पृच्छति चेत् सः उत्तररूपेण वदति स्म यत् - सदा सद्विचारान् एव चिन्तयन्, सत्कार्याणि एव कुर्वन् परोपकारं च कुर्वन् यदि व्यवहरति तर्हि अवश्यं भवान् अपि सदा प्रसन्नवदनः भवितुम् अर्हति इति'' इति।

कदाचित् देशे क्षामः आगतः । तदा जरतुष्ट्रस्य मातापितरौ स्वकीयं सर्वं दरिद्रेभ्यः वितीर्य स्वयं च उपवासेन स्थितवन्तौ। जरतुष्ट्रः यदा सत्यान्वेषणार्थं प्रस्थितः, तदा तस्य पिता तस्मै धनादिकं किमपि दातुम् इष्टवान् । किन्तु जरतुष्ट्रः तत् स्वीकर्तुं न इष्टवान् । स्मारकरूपेण कटिपट्टिं केवलं स्वीकृतवान्। अनन्तरं सः कञ्चित् पर्वतं गत्वा तत्र दश वर्षाणि यावत् महता परिश्रमेण ज्ञानान्वेषणं कृतवान् । अनन्तरं च 'आहुरामज्दा' नामिकया देवतया सह सम्भाषणं कृत्वा स्वसन्देहानां निवारणं कृतवान् । 'आहुरामज्दा' देवतया उक्तानि सच्चिन्तनानि, सद्वचनानि सत्कार्याणि च प्रजाः बोधयन् ताः सन्मार्गे प्रेरितवान् सः।

इदानीम् एकः पूर्णः ग्रन्थः, अन्येषां केषाञ्चित् ग्रन्थानां केचन भागाः च उपलभ्यन्ते । जेन्द्-अवेस्ताग्रन्थस्थानां विषयाणाम्, अस्माकं वेदोक्तविषयाणां च साम्यम् अस्ति इति तु कश्चन विशेषः ।



''प्रकाशस्य सत्यस्य च अधिदेवतायाः 'आहुरामज्दा'-नामिकायाः, अन्धकारस्य दुष्टशक्तेः च अधिपतेः 'अह्रिमान्'नामकस्य च परस्परं युद्धं निरन्तरं प्रचलति एव । ''अस्मिन् युद्धे शिष्टशक्तेः एव अन्तिमः जयः'' इति जेन्द्-अवेस्ता वदति ।

'मानवाः आर्माज्द्वर्येण सृष्टाः चेदपि, तेषु दुष्टशक्तीनां प्रभावः अपि भवति । यदि मानवाः प्रामाणिकतया सत्यं पवित्रं च जीवनं च यापयन्ति, तर्हि सत्यस्य विजयः शीघ्रातिशीघ्रं भविष्यति' इति जरतुष्ट्रः बोधितवान् अस्ति ।

तेन बोधिताः अन्ये अपि केचन अंशाः -

''मानवः सत्कार्याणि करोति चेत् तस्य दिव्यत्वसिद्धिः भवति । मानवः सत्यनिमित्तं निरन्तरं परिश्रमं कुर्यात् । सः परिश्रमः एव तं मानवं भगवतः समीपं नेष्यति । यदि मानवः प्रामाणिकतया व्यवहरति, तर्हि तस्य फलं महत् । एतत् न्याय्यम्, एवमेव आचरणीयम् च इति जानन् अपि मानवः यदि तदनुगुणं न आचरति तर्हि सः भीरुः भविष्यति ।''

# भवन्तः जानन्ति वा ?

१. गल्फ्देशेषु लघुतमः देशः कः ?
२. अस्माकं राष्ट्रियचिह्ने त्रयाणां मृगाणां चित्रम् अस्ति। ते मृगाः के ?
३. बालानां सन्तोषार्थं ये परिश्रमं कुर्वन्ति, तान् पारितोषिकदानेन सम्मानयन्ति पोलण्ड्देशस्य बालाः। तत्र पारितोषिकं किम् ? तत् पारितोषिकं प्राप्तवान् अद्वितीयः भारतीयः कः ?
४. 'मैसपोटेमिया' इत्यस्य अर्थः द्वयोः नद्योः मध्ये विद्यमानः प्रदेशः इति। 'मैसपोटेमिया' कयोः नद्योः मध्ये अस्ति ? तस्य च आधुनिकं नाम किम् ?
५. ऐदम्प्राथम्येन अन्तरिक्षे प्रयाणं कृतवान् भारतीयः कः ?
६. वेणुवाद्ये कति रन्ध्राणि भवन्ति ?
७. चेर्नोबिल्-दुर्घटना कदा प्रवृत्ता ?
८. झान्सीलक्ष्म्याः अपरं बाल्यनाम किम् ?
९. बाष्पस्थाली केन संशोधिता ?
१०. प्रपञ्चस्य देशानां वैशाल्यपरिमाणे अस्माकं देशस्य स्थानं कतमम् ?
११. एकमेव कुटुम्बं चत्वारि नोबेल्-पारितोषिकाणि स्वयकरोत्। तत् कुटुम्बं किम् ? कुटुम्बसदस्याश्च के ?
१२. अस्माकं राष्ट्रियध्वजस्थाः त्रयः वर्णाः केन सूचिताः ?
१३. रक्तबिन्दुः कश्चन समग्रे शरीरे प्रवहन् पुनः हृदयस्थानं कियता कालेन प्राप्नुयात् ?
१४. अण्टार्क्टिकायाम् अस्माकं देशेन व्यवस्थापितं प्रथमं स्थावरं किम् ?
१५. भल्लातकीफले अत्यधिकः जीवसत्त्वांशः कः भवति ?
१६. आङ्ग्लभाषया आरब्धा प्रथमा बालानां पत्रिका का ?

## उत्तराणि

१. बेहरिन्।
२. सिंहः अश्वः वृषभः च।
३. आर्डर् आफ् स्मयिल्। कार्टूनिस्ट् शङ्कर (कि. शङ्करपिळ्ळै, बालजगतः व्यवस्थापकः, सम्पादकः च)।
४. यूफ्रेट्स्-टैगिस्नद्योः मध्ये। इराक्।
५. राकेश शर्मा।
६. अष्ट।
७. १९८६ तमवर्षस्य एप्रिल् २५ दिनाङ्के।
८. मणिकर्णिका।
९. राबर्ट् बोयेल्।
१०. सप्तमम्।
११. क्यूरिस्कुटुम्बम्। मेरी क्यूरी २, पतिः पियरी क्यूरि १, पुत्री एरिन् क्यूरी १।
१२. पिङ्गलयेङ्कय्यमहाशयेन।
१३. विंशतिनिमेषैः।
१४. दक्षिणगङ्गोत्री।
१५. 'सि' - जीवसत्त्वम्।
१६. दि लिली पुटियन्।



# सुवर्णकथितम्

काञ्चनपुरनामके ग्रामे कुचेलनामकः कश्चित् दरिद्रः आसीत् । तस्य पिता महान् धनिकः आसीत् । किन्तु पिता वाणिज्ये महतीं हानिं प्राप्य तया एव मानसिकचिन्तया दिवङ्गतः आसीत् । पित्रार्जिता सम्पत्तिः न आसीत् इति कारणतः कुचेलः महत् दारिद्र्यम् अनुभवति स्म ।

कुचेलस्य चत्वारः पुत्राः । स्वग्रामे एव स्थित्वा अन्येषां गृहे सेवकत्वेन कार्यकरणम् अपमानकरम् इति भावयन् कुचेलः सुदूरस्थम् अन्यं कञ्चित् ग्रामं पत्नीपुत्रैः सह गतवान् । तस्मिन् ग्रामे सः महता परिश्रमेण कार्यं करोति स्म । तथापि तस्य कुटुम्बनिर्वहणं कष्टाय भवति स्म ।

कस्मिंश्चित् दिने कुचेलः कुत्रापि किमपि कार्यं न प्राप्तवान् । बहूनां सकाशात् कुचेलः पूर्वम् ऋणं स्वीकृतवान् आसीत् इति कारणतः केऽपि तस्य धनसाहाय्यं न कृतवन्तः । सः बुभुक्षया अतीव पीडितः आसीत् । 'अहं पत्नीपुत्राणां बुभुक्षां शमयितुं न शक्तः' इति भावः तु तं नितरां पीडयति स्म । अतः सः महत् दुःखम् अनुभूतवान् । आदिनम् इतस्ततः अटन् कुचेलः सायङ्कालसमये कस्यचित् धनिकस्य गृहसमीपे गच्छन् आसीत् ।

तद्गृहस्य पुरतः विशालं वितानं निर्मितम् आसीत् । गृहस्य बहिर्भागे एकस्मिन् पार्श्वे पाकः प्रचलति स्म । गृहे सन्तोषवातावरणम् आसीत् । पाकस्य सुगन्धं जिघ्रतः कुचेलस्य प्राणाः आगताः इव ।

कुचेलः तत्रैव स्थित्वा पाकशालास्थानं सूक्ष्मम् अवलोकितवान् । सर्वे अपि अपरस्मिन् पार्श्वे भोजने मग्नाः आसन् । कुचेलः चिन्तितवान् यत् – अहम् अपि अन्तः गत्वा सर्वैः सह भोजनं करोमि इति । किन्तु



अपरक्षणे सः स्वचिन्तनं परिवर्तितवान् । यतः तस्य वस्त्राणि अतीव मलिनानि आसन् । एतेन एव वेषेण 'यदि अहं भोजनशालां प्रविशेयं, तर्हि सर्वे मां तिरस्कारेण पश्येयुः इति तस्य चिन्तनम् आसीत् ।

'तर्हि इदानीं किं करोमि' इति चिन्तयन् एव कुचेलः पाकशालां प्रविष्टवान् । सौभाग्यवशात् पाकशालायां तस्मिन् समये कोऽपि न आसीत् । कुचेलः पात्रस्थं खाद्यमेकं स्वीकृत्य खादितुम् उद्युक्तः । तावति काले पाकशालां प्रति कश्चित् आगच्छन् अस्ति इति ज्ञात्वा कुचेलः झटिति अपरपार्श्वं गत्वा महापात्रस्य पृष्ठतः गुप्तरूपेण स्थितवान् ।

मध्यवयस्का काचित् महिला तत्र आगतवती । तस्याः मुखे भीतेः छाया दृश्यते स्म । एतत् सर्वम् अवलोकितवान् कुचेलः । तावति काले भोजनशालातः काचित् उक्तवती - ''सावित्रि ! आगमनसमये वृन्ताकस्य व्यञ्जनम् आनयतु'' इति ।

''अस्तु । आनेष्यामि'' इति कम्पमानेन स्वरेण एव उक्तवती पाकशालाम् आगता मध्यवयस्का सा महिला ।

अनन्तरं सा स्ववक्षे गोपितं किमपि वस्तु निष्कास्य इतस्ततः पश्यन्ती कथितपात्रस्य समीपं गतवती ।

एतत् सर्वं पश्यन् कुचेलः चिन्तितवान् - 'एषा महिला पाके विषं किमपि योजयेत्' इति । एवं चिन्तयतः कुचेलस्य हस्ततः खाद्यम् अधः पतितम् ।

मध्यवयस्का महिला पुनरपि सकृत् सर्वत्र पश्यन्ती हस्ते स्थितं वस्तु कथितपात्रे स्थापितवती । स्थापनसमये 'सः सुवर्णहारः' इति ज्ञातवान् कुचेलः ।

'सा महिला सुवर्णहारं कथितपात्रे किमर्थं स्थापितवती स्यात्' इति कुचेलः न ज्ञातवान् । अतीव बुभुक्षाकारणतः सः तद्विषये अधिकं चिन्तयितुं न शक्तवान् ।

अनन्तरं कुचेलः वटककण्डोलतः वटकद्वयं स्वीकृत्य खादितुम् उद्युक्तः । तावता तत्र आगताः केऽपि 'चोरः, चोरः' इति उक्तवन्तः ।

अपरक्षणे एव भीतः कुचेलः उत्थाय धावन् पलायनं कर्तुम् उद्युक्तः । तदा केचन कर्मकराः आगत्य कुचेलं गृहीत्वा तं गृहस्य

स्वामिनः समीपं नीतवन्तः।

कर्मकराः स्वामिनम् उक्तवन्तः - ''स्वामिन्! रात्रौ ये चौर्यं कुर्वन्ति, तेषां ग्रहणं सुलभम्। किन्तु दिने एव ये चौर्यं कुर्वन्ति, तेषां ग्रहणं महते कष्टाय एव। तथापि वयं महता परिश्रमेण चातुर्येण च एतं चोरं गृहीत्वा आनीतवन्तः। एषः पाकशालायां वटकस्य चौर्यं कुर्वन् आसीत्। एतादृशाः चोराः विवाहसमारम्भादीन् एव प्रतीक्षमाणाः भवन्ति चौर्यार्थम्। दर्शनेन एषः 'महाचोरः' इति भाति'' इति।

एतत् श्रुत्वा गृहस्य स्वामी मन्दहासपूर्वकम् उक्तवान् - ''ज्ञातम्। एषः विवाहचोरः इति ज्ञातवान् अहम्'' इति।

गृहस्य स्वामी मां 'चोरः' इत्येव निर्णीतवान् इति ज्ञात्वा कुचेलः अतीव दुःखेन उक्तवान् - ''भोः, वस्तुतः अहं चोरः न। निरुद्योगिनः मम चत्वारः पुत्राः सन्ति। कुतश्चित् अपि उद्योगं न प्राप्तवान् अहं मम कुटुम्बं पोषयितुं न शक्तः। बुभुक्षया पीड्यमानः कश्चित् दरिद्रः अहम्। अद्यपर्यन्तम् अपि बुभुक्षां सोढुं शक्नोमि इति मम आत्मविश्वासः आसीत्। किन्तु अद्य बुभुक्षा एव मां पराजितं कुर्वती पाकशालां प्रति नीतवती। वास्तविकः चोरः अहं न, अपि तु मम बुभुक्षा'' इति।

तदा गृहस्वामी कुचेलम् उद्दिश्य - ''अपराधिनः दण्डनं भवेत् एव खलु! दोषः येन केनापि कृतः भवतु, दोषः दोषः एव'' इति उक्तवान्।



अनन्तरं सः स्वकर्मकरान् उद्दिश्य - ''एतं चोरं मम प्रकोष्ठं प्रति आनयन्तु'' इति उक्त्वा स्वप्रकोष्ठं गतवान्।

कर्मकराः कुचेलं गृहस्वामिनः प्रकोष्ठं नीतवन्तः। तत्र गृहस्वामी कर्मकराणां द्वारा कुचेलाय भूरिभोजनं परिवेषितवान्। एतत् सर्वं दृष्ट्वा कुचेलस्य नेत्रयोः आनन्दाश्रूणि आगतानि।

अनन्तरं गृहस्वामी कुचेलं पृष्टवान् - ''किमर्थं भवते भोजनं दत्तवान् अहम् इति जानाति वा भवान्?'' इति।

कुचेलः 'न जानामि' इति उक्तवान्।

तदा गृहस्वामी कुचेलम् उद्दिश्य - ''अन्नं परब्रह्मस्वरूपम् इति वचनं भवान् श्रुतवान् स्यात्। कोऽपि चौर्येण भोजनं न कुर्यात्।

एतादृशी दुःस्थितिः कस्यापि न भवेत् । भवतः दर्शनात् ज्ञायते यत् - भवान् चोरः न, अपि तु विद्यावान् इति । तर्हि कथम् एतादृशी परिस्थितिः उपस्थिता भवतः ?'' इति पृष्टवान् ।

एतत् श्रुत्वा कुचेलः स्ववृत्तान्तं समग्रं विस्तरेण निवेदितवान् ।

कुचेलस्य वृत्तान्तं श्रुत्वा गृहस्वामी दीर्घं निश्श्वस्य उक्तवान् - ''वाणिज्ये हानिः अपि भवति कदाचित् । भवान् परिस्थितेः कारणतः चोरः जातः । श्वः आगच्छतु । भवते उद्योगं दास्यामि । इदानीं भवान् पत्नीपुत्राणां निमित्तं भोजनं नयतु'' इति ।

अनुक्षणं कुचेलः गृहस्वामिनं नमस्कुर्वन् उक्तवान् - ''स्वामिन् ! भवतः उपकारं कदापि न विस्मरिष्यामि अहम् । पूर्णोदरं भोजनं दत्तवान् भवान् । तदपि भूरि-भोजनम् ! किन्तु 'भोजनं कथम् आसीत् ?' इति मां न पृष्टवान् एव भवान्'' इति ।

कुचेलस्य वचनं श्रुत्वा गृहस्वामी सन्देहं प्राप्य भ्रूः वक्रीकुर्वन् पृष्टवान् - ''पाकः कथम् आसीत् ?'' इति ।

तदा कुचेलः उक्तवान् - ''सर्वम् अपि रुचिकरम् आसीत् । तत्रापि सुवर्णक्वथितं तु अतीव रुचिकरम् आसीत्'' इति ।

एतत् श्रुत्वा गृहस्वामी असमाधानं प्रकटयन् उक्तवान् - ''सुवर्णक्वथितं वा ? यत् वक्तव्यम् अस्ति तत् स्पष्टं वदतु'' इति ।

तदा कुचेलः पाकशालायाम् आत्मना दृष्टं सन्दर्भम् उक्तवान् । अनन्तरं गृहस्वामी पाकशालां गत्वा क्वथितपात्रतः सुवर्णहारं निष्कासितवान् । वस्तुतः सः हारः वध्वाः । तं हारं चोरितवती कर्मकरी सावित्री स्वकीयम् अपराधम् अङ्गीकृतवती ।

बुभुक्षां सोढुम् अशक्तः कुचेलः वटकं चोरयन् कर्मकरैः गृहीतः । किन्तु अनन्तरं वास्तविकचोरस्य ग्रहणे सः साहाय्यं कृतवान् । अतः कुचेलः तद्गृहस्वामिनः प्रीतिपात्रं जातः ।

अनन्तरं गृहस्वामी कुचेलाय उद्योगं दापितवान् । कुचेलस्य जीवने कष्टं यथा न भवेत्, तथा व्यवस्थां कृतवान् सः ।





# पिशाचस्य साहाय्यम्

गोविन्देन करणीयानि कार्याणि बहूनि सन्ति । अस्वस्थस्य पितुः चिकित्सा कारणीया । मात्रे कौशेयशाटिका दापनीया । अनुजाद्वयस्य विवाहः कारणीयः । शिथिलं गृहं समीकारणीयम् । एवं तेन निर्वोढव्यानि कार्याणि बहूनि सन्ति ।

एतत् सर्वं कर्तुं गोविन्दस्य समीपे धनं नास्ति । परोपकारिणः अपि तस्य व्यवहारज्ञानं नास्ति इति कारणतः सः धनं सम्पादयितुं न शक्तवान् ।

गोविन्दस्य परिस्थितिं दृष्ट्वा बहवः तं बोधितवन्तः यत् - केनापि प्रकारेण भवान् धनं सम्पादयतु इति । किन्तु तस्य पिता सर्वदा वदति स्म - ''वत्स ! जीवने यावत् वा कष्टं भवतु, प्रामाणिकतां सौजन्यं च मा त्यजतु । तेन भवान् वास्तविकं सन्तोषं प्राप्स्यति'' इति ।

स्वग्रामे आत्मना यत् सम्पाद्यमानम् अस्ति तत् जीवननिर्वहणार्थं पर्याप्तं न भवति इति कारणतः गोविन्दः नगरं प्रति प्रस्थितवान् । नगरगमनार्थम् अरण्यमार्गेण गन्तव्यम् । गोविन्दः अरण्ये किञ्चिद्दूरं गतवान् । तावता श्रान्तः सः कस्यचित् वृक्षस्य अधः उपविष्टवान् ।

गोविन्दः यस्य वृक्षस्य अधः उपविष्टः आसीत्, तस्मिन् वृक्षे बहोः कालात् कश्चन पिशाचः निवसति स्म । वृक्षस्य अधः उपविष्टं गोविन्दं दृष्ट्वा पिशाचः तत्क्षणे अधः आगतवान् । अकस्मात् समुपस्थितं पिशाचं दृष्ट्वा गोविन्दः भीतः । भीतं गोविन्दं धैर्यवचनानि वदन् पिशाचः गोविन्दस्य मुखात् तस्य वृत्तान्तं ज्ञात्वा तम् उक्तवान् - ''भवान् मां कथाः वदन् अत्रैव तिष्ठतु । अहं प्रभूतं धनं दास्यामि भवते'' इति ।

तदा गोविन्दः किञ्चिदिव धैर्यं प्राप्य पिशाचं काञ्चित् चोरकथाम् उक्तवान् ।

पिशाचः सोत्साहं गोविन्दस्य कथां श्रुत्वा उक्तवान् – "भवता उक्ता कथा, भवतः सम्भाषणशैली च मह्यम् अत्यन्तम् अरोचत। अतः भवान् अत्रैव मया सह निवसतु" इति।

तदा गोविन्दः उक्तवान् – "अवश्यम् अत्रैव स्थातुम् इच्छामि अहम्। किन्तु मम उत्तरदायित्वं महत् अस्ति खलु!" इति।

एतत् श्रुत्वा पिशाचः स्यूतपरिमितानि सुवर्णनाणकानि गोविन्दाय यच्छन् उक्तवान् – "गृहं गत्वा भवान् कार्याणि समाप्य शीघ्रम् एव प्रत्यागच्छतु। अनन्तरं च मया सह अत्रैव निवसतु" इति।

गोविन्दः पिशाचस्य वचनम् अङ्गीकृत्य गृहं गतवान्। पितुः चिकित्सां कारितवान्। मात्रे कौशेयशाटिकां दापितवान्। शिथिलं गृहं समीकारितवान्। किञ्चित् क्षेत्रं क्रीत्वा भाटकार्थं दत्तवान्। अनन्तरं पिशाचं स्मरन् पुनरपि अरण्यं गतवान्।

गोविन्दः पिशाचस्य वासस्थाने दिनद्वयं स्थित्वा पिशाचं राजकुमाराणां राजकुमारीणां च कथाः उक्तवान्। गोविन्दः यावत्कालं पिशाचेन सह तिष्ठति, तावत् पिशाचः सन्तोषेण तिष्ठति स्म। यदा गोविन्दः 'अहं गृहं गच्छामि' इति पिशाचं वदति, तदा पिशाचः अतीव खेदम् अनुभवति स्म।

गोविन्दः दिनद्वयानन्तरं गृहं प्रति प्रस्थितवान्। तदा पिशाचः दैन्येन पृष्टवान् – "भवता गन्तव्यम् एव वा?" इति।

तदा गोविन्दः उक्तवान् – "मम दायित्वम् इतोऽपि न समाप्तम्। अनुजाद्वयस्य



विवाहः कारणीयः अस्ति । मातापित्रोः सुखजीवनार्थम् अपि मया काचित् व्यवस्था करणीया अस्ति । अतः इदानीम् अत्र स्थातुं न शक्नोमि अहम्'' इति ।

एतत् श्रुत्वा पिशाचः पुनरपि सुवर्णनाणकानि गोविन्दाय यच्छन् उक्तवान् - ''भवतः कार्याणि समाप्य शीघ्रं पुनः आगच्छतु'' इति ।

गोविन्दः ततः गृहं गत्वा अनुजयोः विवाहं कारितवान् । अनुजयोः गृहेषु सर्वे अपि सज्जनाः । ते 'मम मातापितरौ प्रीत्या पालयन्ति' इति ज्ञात्वा गोविन्दः अतीव सन्तुष्टः । इदानीं गोविन्दस्य दायित्वानि सर्वाणि समाप्तानि । अन्तिमतया तेन इदानीं पिशाचस्य आशयः पूरणीयः अस्ति ।

पिशाचविषये किं करणीयम् इति गोविन्दः गाम्भीर्येण चिन्तितवान् । सः निर्णीतवान् - 'मां बहुधा उपकृतवान् पिशाचः मया तोषणीयः चेत् मया अपि पिशाचेन भवितव्यम् । तदर्थम् आत्महत्याकरणम् एव उपायः'' इति ।

अनन्तरं गोविन्दः आत्महत्यां कर्तुम् इच्छन् किञ्चित् पर्वतशिखरं गतवान् । पर्वतशिखरं प्राप्तवता गोविन्देन तत्र काचित् सुन्दरी युवतिः दृष्टा ।

तस्याः युवत्याः नाम सरला । सरलायाः बाल्ये एव तस्याः माता दिवङ्गता आसीत् । विमाता सरलां बहुधा पीडयति स्म । तत् सर्वं सोढवती आसीत् सरला । किन्तु इदानीं तस्याः विमाता धनाशया रोगपीडितेन केनचित् वृद्धेन सह सरलायाः विवाहं निश्चितवती आसीत् । एतस्मात् दुःखिता



सरला आत्महत्यां कर्तुम् इच्छन्ती पर्वतशिखरम् आगतवती आसीत्।

उभौ अपि परस्परवृत्तान्तं ज्ञातवन्तौ। अनन्तरं सरला गोविन्दं सविनयम् उक्तवती - "भवान् अतीव सज्जनः अस्ति। पिशाचस्य साहाय्यं युक्तम् एव। किन्तु ततोऽपि उत्तमं फलं मम साहाय्येन प्राप्येत। तेन आवाम् उभौ अपि सन्तोषेण जीवितुं शक्नुवः। अतः भवान् मां परिणयतु" इति।

तदा गोविन्दः उक्तवान् - "भवतीं परिणेतुम् अहं सिद्धः एव। किन्तु प्रत्युपकारकरणं मम धर्मः। अतः मया पिशाचजन्म प्राप्तव्यम् एव" इति।

एतत् श्रुत्वा सरला क्षणकालं विचिन्त्य उक्तवती - "भवान् सज्जनः प्रामाणिकः परोपकारी च। अतः यदि भवान् मृतः भविष्यति, तर्हि अवश्यं स्वर्गम् एव प्राप्स्यति। सर्वथा पिशाचजन्म न प्राप्स्यति। अतः भवान् मां परिणयतु। विवाहानन्तरम् आवाम् अरण्यं गत्वा पिशाचस्य वासस्थानसमीपे एव वसाव" इति।

सरलायाः एतानि वचनानि गोविन्दाय अरोचन्त। सः तत्रैव गान्धर्वविधिना सरलां परिणीय पत्न्या सह ततः साक्षात् पिशाचस्य वासस्थानं गतवान्।

पिशाचस्य वासस्थाने देवपुरुषः कश्चित् प्रत्यक्षीभूय तौ उद्दिश्य - "अहं शापग्रस्तः आसम्। सर्वाणि सुखानि अनुभोक्तुं भवतः अवकाशः आसीत्। अवकाशे सत्यपि भवान् तत् सर्वं परित्यज्य पिशाचस्य मम साहाय्यं कर्तुम् उद्युक्तः। भवतः त्यागबुद्धेः कारणतः एव मम शापविमोचनं जातम्। भवन्तौ आशिषा अनुग्रहीतुम् एव अत्र प्रतीक्षमाणः आसम् अहम्" इति वदन् तौ आशिषा अनुगृहीतवान्। ततः अदृश्यः जातः च।

'पिशाचः माम् उपकृतवान्। अहम् अपि प्रत्युपकारं कृतवान्' इति चिन्तयन् गोविन्दः आत्मानं धन्यं मतवान्। अनन्तरं सः सरलया सह ग्रामं गतवान्। मातापित्रोः समक्षं सरलां विधिपूर्वकं परिणीतवान्। अनन्तरं च यथाशक्ति परोपकारं कुर्वन् पत्न्या सह सुखेन जीवितवान्।





# महाभारतम्

शुक्राचार्यः यदा ययातिं शप्तवान्, तदा ययातिः महता दुःखेन शुक्राचार्यस्य पादयोः पतित्वा क्षमां प्रार्थयन् उक्तवान् - ''आचार्य ! कृपया मां मा शपतु । एतत् न्याय्यं न । अत्र मम अपराधः कोऽपि नास्ति । शर्मिष्ठा मां पुत्रभिक्षां याचितवती । अहं यदि तस्याः प्रार्थनां तिरस्कुर्याम्, तर्हि भ्रूणहत्यापापी अभविष्यम् । अतः पापभीत्या एव अहं शर्मिष्ठायाः प्रार्थनाम् अङ्गीकृतवान् । देवयान्याः द्रोहः आचरणीयः इति चिन्तनं मम सर्वथा नास्ति'' इति ।

तदा शुक्राचार्यः किञ्चित् शान्तः सन् उक्तवान् - ''मम शापः कदापि व्यर्थः न भविष्यति । किन्तु शापविमोचनार्थं कञ्चित् उपायं वदामि । भवान् इतोऽपि कञ्चन कालं यावत् यौवनम् अनुभोक्तुम् इच्छति चेत् भवतः वार्धक्यम् अन्यस्मै कस्मैचित् युवकाय दत्त्वा ततः तस्य यौवनं स्वीकर्तुम् अर्हति'' इति ।

'मम वार्धक्यं स्वीकृत्य यौवनं ददातु इति अन्यः किमर्थं प्रार्थनीयः ? मम पुत्रान् एव एतं विषयं निवेदयामि । यः सम्मतिं प्रदर्शयति, तस्य पट्टाभिषेकं करोमि' इति विचिन्त्य ययातिः स्वकीयम् एतम् अभिप्रायं शुक्राचार्यं निवेदितवान् ।

शुक्राचार्यः ययातेः वचनम् अङ्गीकृतवान् ।

अपरक्षणे एव ययातौ शापपरिणामः दृष्टः । सः वृद्धः जातः । तस्य शिरसः कम्पनम् आरब्धम् । अस्थीनि बलहीनानि जातानि । केशाः पलिताः । एतादृशपरिस्थितौ सः स्वज्येष्ठपुत्रं यदुम् आहूय स्वशापवृत्तान्तं



निवेद्य उक्तवान् - "वत्स ! कञ्चन कालं यावत् मम वार्धक्यं स्वीकृत्य भवतः यौवनं मह्यं ददाति वा भवान् ? किञ्चित्कालानन्तरं मम वार्धक्यम् अहं प्रतिस्वीकरिष्यामि" इति।

यदुः एतत् सर्वथा न अङ्गीकृतवान्।

एतस्मात् कुपितः ययातिः यदुना तस्य पुत्रैः वा राज्यं यथा न प्राप्येत तथा व्यवस्थां कृतवान्।

ययातेः अन्ये पुत्राः अपि पितुः वार्धक्यं स्वीकर्तुं न इष्टवन्तः।

शर्मिष्ठायाः पुत्रेषु अन्तिमः पूरुः पितुः आशयम् अङ्गीकृतवान्। शुक्राचार्यस्य अनुज्ञया ययातिः स्ववार्धक्यं पूरवे दत्त्वा तस्य यौवनं स्वीकृतवान्। अनन्तरं च विश्वाचीनामिकया अप्सरसा सह रमणीयेषु स्थलेषु विहरन् सुखम् अनुभूतवान्। एवमेव कानिचन दिनानि अतीतानि। ययातेः यौवनेच्छाः पूर्णाः जाताः। अनन्तरं सः पुत्राय पूरवे यौवनं दत्त्वा स्ववार्धक्यं प्रतिस्वीकृत्य पूरोः पट्टाभिषेकं कारितवान्।

पूरोः पौष्टिः कौसल्या चेति पत्नीद्वयम्। तयोः उभयोः अपि पुत्राः जाताः। कौसल्यायाः पुत्रः जनमेजयः। जनमेजयस्य मरणात् अनन्तरं पञ्चदश परम्पराः समाप्ताः। षोडशपरम्परायां दुष्यन्तः जातः। दुष्यन्तः विश्वामित्रस्य पुत्रीं शकुन्तलां परिणीतवान्। तयोः पुत्रः एव भरतः।

विश्वामित्रस्य पुत्र्याः जन्म एवम् अभवत् -

कदाचित् विश्वामित्रः उग्रं तपः आचरितवान्। तस्य तपसः कारणात् भीतः इन्द्रः मेनकानामिकाम् अप्सरसम् आहूय उक्तवान् - "विश्वामित्रः उग्रं तपः कुर्वन् अस्ति। यदि तस्य तपः निर्विघ्नं समाप्तं भविष्यति, तर्हि देवतानाम् अपायः निश्चितः एव। अतः इदानीम् एव भवती गत्वा चातुर्येण विश्वामित्रस्य तपोभङ्गं करोतु" इति।

विश्वामित्रः न सामान्यः ऋषिः। सः राजकुले जन्म प्राप्य स्वतपश्शक्त्या ब्रह्मर्षिः जातः। शीघ्रकोपी सः पूर्वं कदाचित् महानुभावस्य वसिष्ठस्य एव पुत्रशोकम् उत्पादितवान् आसीत्। शापकारणात् चण्डालजन्म प्राप्तवतः त्रिशङ्कोः द्वारा यज्ञं

कारितवान् आसीत् विश्वामित्रः। तस्मात् भीतः इन्द्रः यज्ञस्थानं गत्वा हविर्भागं स्वीकृतवान् आसीत्। विश्वामित्रः स्वशक्त्या एव त्रिशङ्कुं स्वर्गं यदा प्रेषितवान्, तदा देवताः त्रिशङ्कुम् अधः पातितवत्यः। तस्मिन् समये त्रिशङ्कुः अधः भूमौ यथा न पतेत्, तथा अन्तरिक्षे एव कश्चित् स्वर्गं निर्माय तत्र त्रिशङ्कुं स्थापितवान् आसीत् विश्वामित्रः। विश्वामित्रः एतादृशशक्तिमान् इति जानती अपि मेनका विश्वामित्रस्य तपोभङ्गं कर्तुं तस्य आश्रमं प्रति प्रस्थितवती।



मेनका विश्वामित्रस्य आश्रमं गत्वा तं नमस्कृत्य तत्र आश्रमे विहारम् आरब्धवती। मेनकायाः सौन्दर्यदर्शनेन विश्वामित्रस्य मनः चञ्चलं जातम्। तस्मिन् मनोविकारः उत्पन्नः इति ज्ञात्वा मेनका अनुरागं दर्शयन्ती सुलभतया तं वशीकृतवती। तयोः दाम्पत्यकारणतः एका सुन्दरी पुत्री जाता। पुत्र्याः जननसमनन्तरम् एव मेनका तं शिशुं मालिनीनदीतीरस्थे अरण्ये त्यक्त्वा देवलोकं प्रतिगतवती।

मालिनीनदीतीरस्थे अरण्ये क्रूरमृगाः सदा निर्भयं सञ्चरन्ति। तादृशे अरण्ये शकुन्तपक्षिणः तं शिशुं स्वपक्षाभ्याम् आच्छाद्य रक्षितवन्तः। मध्याह्नसमये स्नानार्थं तत्र आगतः कण्वमहामुनिः शकुन्तपक्षिभिः रक्ष्यमाणं शिशुं दृष्टवान्। शिशोः बान्धवाः केऽपि समीपे स्युः वा इति अवलोकितवान् कण्वः। किन्तु तेन तत्र कोऽपि न दृष्टः। अनन्तरं सः तं शिशुं स्वकीयम् आश्रमं नीत्वा 'शकुन्तला' इति नामकरणं कृतवान्। अनन्तरं तां पुत्रीवत् पालितवान्।

दिनेषु गतेषु शकुन्तला प्रौढा जाता। सा कण्वमुनिम् एव पितरं मत्वा आश्रमस्य सर्वाणि कार्याणि निर्वहति स्म।

दुष्यन्तः कदाचित् मृगयार्थं मालिनीनदीतीरं सपरिवारम् आगतवान्। तत्र कण्वमुनेः आश्रमं दृष्टवान् सः। तस्मिन् आश्रमे मुनिकुमाराः वेदपठनं कुर्वन्तः आसन्। केचन अग्नौ हविः अर्पयन्तः आसन्। एकत्र अध्ययनं प्रचलति स्म। अन्यत्र सामगानं सुमधुरं श्रूयते स्म। एतत् सर्वं दृष्ट्वा दुष्यन्तः चिन्तितवान् यत् - एषः आश्रमः अतीव श्रेष्ठः इति।



तदा शकुन्तला उक्तवती – "मम पिता कण्वमुनिः फलानि समिधः च आनेतुं गतवान् अस्ति। उपविशतु भवान्। इदानीम् एव आगमिष्यति मम पिता" इति।

शकुन्तलायाः वचनमाधुर्यं श्रुत्वा दुष्यन्तः रोमाञ्चितः। तस्मिन् शकुन्तलायाः विषये प्रीतिः उत्पन्ना। शकुन्तला अविवाहिता इति तस्याः दर्शनमात्रेण एव ज्ञात्वा सः ताम् उक्तवान् – "कण्वमहामुनिः ब्रह्मचारी इति श्रुतवान् अस्मि अहम्। अतः कण्वः कथं भवत्याः पिता भवितुम् अर्हति? वस्तुस्थितिं वदतु। भवती कस्य पुत्री? कथम् एतम् आश्रमम् आगतवती? यतः भवत्याः दर्शनमात्रेण अहं भवत्याम् अनुरक्तः जातः अस्मि" इति।

अनन्तरं दुष्यन्तः परिवारम् आश्रमस्य द्वारे एव स्थापयित्वा एकाकी एव आश्रमं प्रविष्टवान्। कण्वमहामुनेः कुटीरसमीपं गतवान् च। 'अन्तः कः अस्ति?' इति उच्चस्वरेण पृष्टवान् सः। तदा तपस्विवेषधारिणी शकुन्तला बहिः आगत्य दुष्यन्तं दृष्ट्वा सादरं सत्कृतवती। अनन्तरं च पृष्टवती शकुन्तला – "किम् आवश्यकम्? किंनिमित्तं भवान् आगतवान्?" इति।

शकुन्तलायाः सौन्दर्येण अतिथिसत्कारेण च आकृष्टः दुष्यन्तः शकुन्तलाम् उद्दिश्य – "अहं मृगयार्थम् एतं प्रदेशम् आगतवान्। कण्वमहर्षेः दर्शनम् इच्छन् अहम् अत्र आगतवान्। कण्वमुनिः नास्ति वा? कुत्र गतवान् सः?" इति पृष्टवान्।

पूर्वं कदाचित् कण्वमुनिः अन्यं कञ्चित् मुनिवर्यं शकुन्तलाजन्मवृत्तान्तं वदति स्म। तत् शकुन्तला श्रुतवती आसीत्। यदा दुष्यन्तः शकुन्तलायाः कुलगोत्रादिकं पृष्टवान्, तदा सा आत्मना पूर्वं ज्ञातं स्वजन्मवृत्तान्तं दुष्यन्तं निवेदितवती।

शकुन्तलायाः जन्मवृत्तान्तं श्रुत्वा दुष्यन्तः उक्तवान् – "एवं तर्हि भवती राजवंशे जाता। रूपवती गुणवती च भवती वल्कलवस्त्राणि धरन्ती अरण्ये आश्रमकुटीरे वासं कुर्वती फलाहारं खादन्ती वसति खलु! भवत्याः एतादृशीं स्थितिं मम मनः न अङ्गीकरोति। भवती मां परिणीय मया सह राजधानीम् आगच्छतु। राजभवने वसन्ती सन्तोषेण तिष्ठतु च। भवती एव महाराज्ञी

भविष्यति'' इति।

तदा शकुन्तला लज्जाम् अनुभवन्ती शिरः अवनमय्य – ''मम पितुः आगमनानन्तरं तस्य अनुज्ञां प्राप्य भवान् मां परिणेतुम् अर्हति'' इति उक्तवती।

शकुन्तलायाः एतत् वचनं श्रुत्वा दुष्यन्तः ज्ञातवान् यत् – मयि शकुन्तलायाः अनुरागः अस्ति इति। अतः सः शकुन्तलाम् उक्तवान् – ''मम मनः भवतीम् एव चिन्तयति। अतः दीर्घकालं यावत् विरहतापं सोढुं न शक्नोमि अहम्। गान्धर्वविवाहार्थं मन्त्रपुरोहितादीनाम् आवश्यकता एव नास्ति। वधूवरयोः इच्छा एव प्रधानं, न तु अन्येषाम्। एषः रहस्यविवाहः। अतः यदि भवत्याः अनुमतिः स्यात् तर्हि इदानीम् एव आवां गान्धर्वविधिना विवाहितौ भवाव'' इति।

तदा शकुन्तला उक्तवती – ''आवयोः पुत्रः एव यदि अग्रे युवराजः भविष्यति, तर्हि एव इदानीं गान्धर्वविधिना आवयोः विवाहः भवितुं शक्यः, न अन्यथा'' इति।

दुष्यन्तः एतत् अङ्गीकृतवान्। तयोः विवाहः जातः।

अनन्तरं दुष्यन्तः शकुन्तलाम् उद्दिश्य – ''इदानीम् अहं राजधानीं गत्वा भवत्याः नयनार्थं भटान् प्रेषयिष्यामि'' इति उक्त्वा ततः गतवान्।

एतं विषयं ज्ञात्वा कण्वमुनिः कुपितः भवेत् इति भीतिः आसीत् दुष्यन्तस्य। अतः एव सः कण्वस्य आगमनात् पूर्वम् एव ततः निर्गतवान् आसीत्। गान्धर्वविधिना प्रवृत्तस्य विवाहस्य विषये पितुः प्रतिक्रिया





का स्यात् इति शकुन्तलायाः अपि भीतिः आसीत् एव।

किञ्चित्कालानन्तरं कण्वमहामुनिः समिधः फलानि च गृहीत्वा कुटीरम् आगतवान्। हस्तौ पादौ च प्रक्षाल्य उपविष्टवान् च। तदा शकुन्तला लज्जां भयं च अनुभवन्ती पितुः समीपम् आगतवती।

दिव्यदृष्ट्या प्रवृत्तं सर्वं ज्ञात्वा कण्वमुनिः शकुन्तलाम् उक्तवान् - "वत्से ! भवती योग्यम् एव परिणीतवती अस्ति। भवती महापुरुषं पुत्रत्वेन प्राप्स्यति। स च पुत्रः अग्रिमकाले महान् चक्रवर्ती भविष्यति। भवत्याः या कापि इच्छा अस्ति चेत् वदतु। अहं पूरयिष्यामि" इति।

पितुः वचनं श्रुत्वा शकुन्तला उक्तवती - "मम यः पुत्रः जनिष्यते सः दीर्घायुष्मान् बलवान् सम्पद्युक्तः च भवतु। सः एव वंशोद्धारकः अपि भवतु इति मम आशयः" इति।

"भवत्याः आशयः अवश्यं पूरितः भविष्यति" इति उक्तवान् कण्वमुनिः। एतत् श्रुत्वा शकुन्तलायाः मनसः समाधानं जातम्।

केचन मासाः अतीताः। शकुन्तला पुत्रं प्रसूतवती। कण्वमुनिः शकुन्तलायाः पुत्रस्य शास्त्ररीत्या क्षत्रियधर्मानुसारं च जातकर्मादीनि कारितवान्। शकुन्तलायाः पुत्रः शुक्लपक्षचन्द्रः इव वर्धमानः आसीत्। सः अतीव चेष्टालुः आसीत्। सः क्रूरमृगान् सिंहव्याघ्रगजादीन् गृहीत्वा आश्रमस्थेषु वृक्षेषु बद्ध्वा तेषां प्राणिनाम् उपरि उपविश्य सञ्चारं करोति स्म। आश्रमस्थान् मुनिवर्यान् भाययति स्म। आश्रमस्य सर्वे जनाः अपि तं प्रीत्या सर्वदमननाम्ना आह्वयन्ति स्म।

कदाचित् कण्वमुनिः शकुन्तलां स्वसमीपम् आहूय उक्तवान् - "वत्से! इदानीं भवत्याः पुत्रः किञ्चिदिव प्रौढः जातः अस्ति। युवराजः भवितुं योग्यः अस्ति। अतः इदानीं सः पितुः समीपे तिष्ठति चेत् एव वरम्। भवती अपि कियन्तं कालं पितृगृहे स्थातुं शक्नोति ? कदाचित् वा पतिगृहं गन्तव्यम् एव खलु ! अतः सद्यः एव भवतीं पत्युः समीपं प्रेषयिष्यामि" इति।

अनन्तरदिने एव कण्वमुनेः शिष्याः केचन शकुन्तलां सर्वदमनं च दुष्यन्तस्य नगरं

प्रापय्य आश्रमं प्रतिगतवन्तः।

दुष्यन्तस्य राजभवनस्य द्वारपालकः शकुन्तलायाः सर्वदमनस्य च अन्तः गमनार्थम् अनुमतिं दत्तवान्। किन्तु दुष्यन्तः शकुन्तलायाः दर्शनेन अपि तां न अभिज्ञातवान्। शकुन्तलया सह अपरिचितः इव व्यवहृतवान्।

एतस्मात् दुःखिता शकुन्तला दुष्यन्तम् उक्तवती - "राजन्! भवान् कदाचित् मृगयां कुर्वन् कण्वमुनेः आश्रमम् आगतवान् आसीत्। विस्मृतवान् वा भवान्? एषः भवतः पुत्रः। एतं युवराजं करिष्यामि इति भवता वचनं दत्तम् आसीत्। दत्तं वचनं मा उल्लङ्घतां कृपया" इति।

एतत् श्रुत्वा दुष्यन्तः किमपि अजानन् इव अभिनयन् कोपेन उक्तवान् - "दुष्टे! का भवती? अहं भवतीं सर्वथा न जानामि। प्रथमं गच्छतु इतः" इति।

दुष्यन्तस्य वचनं श्रुत्वा शकुन्तला दुःखकोपमिश्रितेन स्वरेण उक्तवती - "राजन्! अन्ये कथमपि एतं विषयं न जानन्ति इति असत्यं वदति वा भवान्? यत् प्रवृत्तं तस्य साक्षी भवतः आत्मा एव। वस्तुतः महाराजः भवान् मया बोधनीयः नास्ति। महाराजस्य भवतः एतादृशः व्यवहारः सर्वथा न युज्यते। सत्यस्य गोपनं महते पापाय। पूर्वं यया प्रीत्या भवान् मां पत्नीत्वेन स्वीकृतवान् तया एव प्रीत्या अद्य मां परिगृह्णातु। पशुपक्षिणः अपि स्वपुत्रेषु अत्यन्तं प्रीतिमन्तः भवन्ति। एषः भवतः पुत्रः। कृपया मा निराकरोतु" इति।

तदापि दुष्यन्तस्य कोपः न शान्तः।

तस्मिन् क्षणे आकाशात् काचित् अशरीरवाणी श्रुता - "राजन्! दुष्यन्त! एषः बालकः भवतः शकुन्तलायाः च पुत्रः। पुत्रं पत्नीं च प्रीत्या अङ्गीकरोतु। भवतः पुत्रः 'भरतः' इति प्रसिद्धिं प्राप्स्यति" इति।

अशरीरवाणीं श्रुतवतः दुष्यन्तस्य भयम् अपगतम्। शकुन्तला दुष्यन्तस्य पत्नी, तस्याः पुत्रः च दुष्यन्तस्यापि पुत्रः इति सर्वे ज्ञातवन्तः। अनन्तरं दुष्यन्तः पत्नीं पुत्रं च प्रीत्या अङ्गीकृतवान्।





# असूयापरा धनलक्ष्मीः

वरलक्ष्मीः धनलक्ष्मीः च सहोदर्यौ । ते उभे अपि सख्यौ इव तिष्ठतः स्म । ज्येष्ठा वरलक्ष्मीः कनिष्ठा धनलक्ष्मीः । धनलक्ष्मीः अहङ्कारिणी असूयापरा च । यदा ते प्राप्तवयस्के जाते तदा पिता तयोः विवाहं निर्वर्तितवान् ।

धनलक्ष्मीः रूपवती । तस्याः सौन्दर्येण आकृष्टः धनिकपुत्रः कश्चित् तां परिणीतवान् आसीत् । वरलक्ष्म्याः पतिः तु न धनिकः । सः नगरे महाराजस्य आस्थाने उद्योगी । सौन्दर्येण सामान्यरूपवान् सः ।

वरलक्ष्मीः धनलक्ष्मीः च विवाहानन्तरं पतिगृहं गतवत्यौ । धनलक्ष्मीः सदा अग्रजायाः वरलक्ष्म्याः कुटुम्बविषये एव चिन्तयति स्म । वरलक्ष्मीः पतिगृहे सन्तोषेण अस्ति इति वार्तां श्रुत्वा धनलक्ष्मीः असूयया तदा तदा पतिं वदति स्म – "वयं धनिकाः । तथापि जनाः 'मम कुटुम्बस्य अपेक्षया वरलक्ष्म्याः कुटुम्बे एव सुखसन्तोषादयः दृश्यन्ते' इति वदन्तः सन्ति" इति ।

तदा पतिः पत्नीं धनलक्ष्मीं सान्त्वयति स्म – "वरलक्ष्मीः भवत्याः एव सहोदरी खलु ! सा सन्तोषेण अस्ति चेत् भवत्याः अपि सन्तोषः एव खलु ?" इति ।

कानिचन दिनानि अतीतानि । वरलक्ष्म्याः सुखजीवनस्य रहस्यं किं स्यात् इति ज्ञातुम् इच्छन्तौ धनलक्ष्मीः, धनलक्ष्मीपतिः च कदाचित् वरलक्ष्म्याः गृहं प्रति प्रस्थितवन्तौ ।

वरलक्ष्म्याः गृहम् अतीव लघु । गृहे किमपि मूल्यवत् वस्तु नास्ति । कर्मकराः न सन्ति । 'गृहे एतादृशपरिस्थितौ सत्याम् अपि एतौ कथं सन्तोषेण जीवतः ?' इति चिन्तयन्तौ धनलक्ष्मीः धनलक्ष्मीपतिः च आश्चर्यम् अनुभूतवन्तौ ।

वरलक्ष्म्याः पतिः सायङ्कालसमये



पुराणश्लोकादीनाम् अर्थं विवृणोति स्म । एतत् श्रोतुं बहवः तत्र आगच्छन्ति स्म । ते सर्वे वरलक्ष्म्याः पतिं गौरवेण पश्यन्ति स्म । प्रायशः एतत्कारणतः एव वरलक्ष्मीकुटुम्बं सन्तोषेण स्यात् इति धनलक्ष्मीः ऊहितवती ।

अनन्तरदिने सायङ्काले वरलक्ष्म्याः पतिः प्रवचनं आरब्धवान् । प्रवचनस्य मध्ये धनलक्ष्म्याः पतिः उत्थाय पुराणश्लोकानाम् अर्थं भिन्नप्रकारेण निरूपितवान् । पुराणं श्रोतुम् आगताः आश्चर्येण धनलक्ष्म्याः पतिं पृष्टवन्तः – ''भवान् स्वग्रामे प्रतिदिनं प्रवचनं करोति वा ?'' इति ।

तदा धनलक्ष्म्याः पतिः उक्तवान् – ''ममापि प्रतिदिनं प्रवचनं करणीयम् इति - इच्छा अस्ति । किन्तु वाणिज्यकार्ये एव मम सर्वः समयः यापितः भवति । मत्तः वाणिज्यसूक्ष्मान् ज्ञातुम् इच्छन्तः बहवः मम गृहम् आगच्छन्ति । प्रवचनकरणे विशेषचातुर्यं न आवश्यकम्, किन्तु वाणिज्यज्ञानं जन्मतः आगच्छेत्'' इति ।

धनलक्ष्म्याः पत्युः वचनं सर्वेऽपि अङ्गीकृतवन्तः । वरलक्ष्म्याः पतिः अपि - 'धनलक्ष्म्याः पत्युः समयस्य एकैकः क्षणः अपि मूल्ययुतः' इति वदन् तस्य प्रशंसां कृतवान् ।

वरलक्ष्म्याः समीपे प्राचीनः कश्चन देवताविग्रहः आसीत् । तं विग्रहं क्रेतुम् इच्छन्तः बहवः जनाः वरलक्ष्म्याः गृहम् आगतवन्तः आसन् । किन्तु वरलक्ष्मीः विग्रहं विक्रेतुं न इच्छति स्म । अतः सा न विक्रीतवती आसीत् । तथापि तस्य विग्रहस्य दर्शनार्थं प्रतिदिनं जनाः वरलक्ष्म्याः गृहम् आगच्छन्ति स्म । 'स्वसमीपे अपूर्वः देवताविग्रहः अस्ति इति कारणतः वरलक्ष्मीः महान्तं गर्वम् अनुभवति' इति चिन्तितवती धनलक्ष्मीः ।

धनलक्ष्मीः दिनचतुष्टयानन्तरं पत्या सह स्वगृहं प्रति प्रस्थिता । प्रस्थानसमये सा भगिनीम् आवुत्तं च साग्रहं गृहं प्रति आमन्त्रितवती ।

वरलक्ष्मीः भगिन्याः आह्वानं ससन्तोषम् अङ्गीकृतवती । अनन्तरं च सा अनुजां धनलक्ष्मीम् उक्तवती – ''भगिनि ! भवत्यै किमपि दातव्यम् इति मम इच्छा । भवत्याः

योग्यतानुगुणं दातुं मम सामर्थ्यं नास्ति । मया दीयमानं वस्त्रं भवती न धरेत् । अतः मम सामर्थ्यानुगुणं भवत्याः तृप्तिदायकं च वस्तु यदि मयि स्यात्, तर्हि पृच्छतु, अवश्यं दास्यामि अहम्'' इति ।

एतत् श्रुत्वा धनलक्ष्मीः उक्तवती - ''भवत्याः अपूर्वं देवताविग्रहं ददातु'' इति ।

वरलक्ष्मीः देवताविग्रहं भगिन्यै दत्तवती । अनन्तरं धनलक्ष्मीः पत्या सह स्वगृहं गतवती ।

गृहं गत्वा धनलक्ष्म्याः पतिः पत्नीम् उद्दिश्य - ''भवती किमर्थं भगिनीतः देवताविग्रहं स्वीकृतवती ? विग्रहस्वीकरणेन वरलक्ष्म्याः एव उदारता प्रतिपादिता अभवत् खलु !'' इति पृष्टवान् ।

तदा धनलक्ष्मीः मन्दहासपूर्वकं पतिम् उक्तवती - ''मम समीपे यानि वस्तूनि न सन्ति, तादृशानि अन्यस्य समीपे अपि न भवेयुः इति मम आशयः । एतादृशः अपूर्वः विग्रहः अन्यत्र कुत्रापि नास्ति । अतः इदानीम् अहम् एव धनिका श्रेष्ठा च जाता खलु !'' इति ।

कानिचन दिनानि अतीतानि । वरलक्ष्मीः कदाचित् पत्या सह धनलक्ष्म्याः गृहम् आगतवती । धनलक्ष्मीः गर्वेण वैभवयुतं स्वगृहं दर्शितवती । अनुजायाः वैभवजीवनं दृष्ट्वा वरलक्ष्मीः अतीव सन्तोषम् अनुभूतवती । किन्तु धनलक्ष्मीः चिन्तितवती यत् - वरलक्ष्मीः मम जीवनशैलीं दृष्ट्वा सन्तोषं प्रकटयति यत्, तत् कृत्रिमम् एव इति ।



कानिचन दिनानि भगिन्याः गृहे उषित्वा वरलक्ष्मीः पत्या सह स्वगृहं प्रति प्रस्थिता । तस्याः प्रस्थानदिने एव वणिक् कश्चित् धनलक्ष्म्याः गृहम् आगत्य ताम् उक्तवान् - ''अपूर्वं मौक्तिकद्वयम् अस्ति मम समीपे । एकस्य मौक्तिकस्य मूल्यं दशसहस्रं रूप्यकाणि । भवती एकं मौक्तिकं स्वीकरोति चेत् अपरं मौक्तिकं योग्यं मूल्यं स्वीकृत्य कस्मैचित् महाराजाय दास्यामि'' इति ।

धनलक्ष्मीः तत् मौक्तिकम् अतीव इष्टवती । सा उक्तवती - ''एतत् मौक्तिकद्वयम् अपि अहम् एव क्रेष्यामि'' इति ।

एतत् श्रुत्वा वणिक् आश्चर्येण पृष्टवान् - ''भगिनि ! मौक्तिकद्वयं स्वीकृत्य किं करोति



भवती ? हारे योजयितुम् एकं मौक्तिकं पर्याप्तं खलु !'' इति।

तदा धनलक्ष्मीः उक्तवती – ''मयि यादृशं वस्तु भवति तादृशम् अन्यत्र न भवेत्। यदि अहम् इदानीम् एकम् एव मौक्तिकं स्वीकरोमि, तर्हि अपरं मौक्तिकम् अन्यः कश्चित् स्वीकरोति एव। एतत् अहं सर्वथा न इच्छामि'' इति।

एतत् श्रुत्वा वणिक् प्रत्युत्तरं किमपि अवदन् मौक्तिकद्वयम् अपि धनलक्ष्म्यै विक्रीय धनं स्वीकृत्य ततः निर्गतवान्।

वणिजः गमनानन्तरं वरलक्ष्मीः पत्या सह प्रस्थितवती। प्रस्थानात् पूर्वं धनलक्ष्मीः वरलक्ष्म्यै अल्पमूल्यकाम् एकां शाटिकाम् उपायनीकृतवती।

धनलक्ष्म्याः गृहे सर्वाणि अपि कार्याणि कर्मकराणां द्वारा एव प्रचलन्ति स्म। अतः धनलक्ष्म्याः कार्यं किमपि न भवति स्म। एतस्मात् कारणात् धनलक्ष्मीः वर्षाभ्यन्तरे एव अत्यन्तं स्थूला जाता। अतः तस्याः सौन्दर्यं किञ्चित् न्यूनं जातम्।

स्वशरीरस्य स्थौल्यम् एव चिन्तयन्ती धनलक्ष्मीः – 'भगिनी वरलक्ष्मीः इदानीं मम अपेक्षया कृशकाया सुन्दरी च जाता अस्ति' इति चिन्तयन्ती महत् दुःखम् अनुभवति स्म।

शरीरस्य स्थौल्यं निवारयितुम् इच्छन्ती धनलक्ष्मीः वैद्यं दृष्टवती। वैद्यः तां परीक्ष्य उक्तवान् – ''भवत्याः शरीरे सामर्थ्यं नास्ति। यदि एवमेव अनुवर्तते भवत्याः स्थौल्यं तर्हि अग्रे भवत्याः सन्धिवेदना, उरोवेदना, श्वासकासः इत्यादयः सम्भवेयुः। अतः किञ्चित्कालं यावत् भवत्या मिताहारः स्वीकरणीयः। प्रतिदिनं व्यायामः च करणीयः'' इति।

वैद्यस्य सूचनानुसारं धनलक्ष्मीः प्रतिदिनं योगाभ्यासं कृतवती। आहारं न्यूनीकृतवती। एतस्य परिणामतः सा निश्शक्ता जाता। इतःपरम् आजीवनं मया स्थूलशरीरवत्या एव भवितव्यं स्यात् इति विचिन्त्य धनलक्ष्मीः महत् मानसिकं दुःखम् अनुभूतवती। एतस्य परिणामतः केनचित् रोगेण पीडिता सा शय्याम् आश्रितवती।

धनलक्ष्म्याः अस्वास्थ्यविषयं ज्ञात्वा वरलक्ष्मीः तां द्रष्टुम् आगतवती। अग्रजायाः

मुखदर्शनेन एव धनलक्ष्म्याः मुखं प्रसन्नं जातम्। यतः इदानीं वरलक्ष्मीः धनलक्ष्म्याः अपेक्षया अपि स्थूला जाता आसीत्। धनलक्ष्मीः वरलक्ष्मीं पृष्टवती – ''कथं भवती एतावत्स्थूला जाता ?'' इति।

'भगिनी एषा योगक्षेमादिकम् अपृष्ट्वा स्थौल्यविषयं केवलं पृच्छन्ती अस्ति' इति चिन्तयित्वा वरलक्ष्मीः खिन्ना।

धनलक्ष्मीः अग्रजां साग्रहम् उक्तवती यत् कानिचन दिनानि अत्रैव तिष्ठतु इति। वरलक्ष्मीः भगिन्याः वचनम् अङ्गीकृतवती। क्रमशः धनलक्ष्मीः स्वस्था जाता। किन्तु पुनरपि स्थूला जाता।

एतत् सर्वं ज्ञात्वा वरलक्ष्म्याः पतिः पत्नीम् उक्तवान् – ''प्रयत्नेन भवती स्वस्य स्थौल्यं निवारयतु'' इति।

तदा वरलक्ष्मीः उक्तवती – ''सौन्दर्यं दूरे तिष्ठतु नाम। स्थौल्यनिवारणं कथम् इत्येव समस्या मम। यतः स्थौल्यं निवारयितुं महत् कष्टम् अनुभोक्तव्यं भवति'' इति।

एतत् श्रुत्वा वरलक्ष्म्याः पतिः उक्तवान् – ''मया यत् उच्यते, तत् भवत्याः भगिन्याः धनलक्ष्म्याः हितार्थम्'' इति।

पत्युः वचनस्य गूढार्थम् अजानती वरलक्ष्मीः पत्युः मुखं दृष्टवती। तदा पतिः उक्तवान् – ''भवती स्थूला जाता अस्ति इति भवत्याः अनुजा सन्तोषम् अनुभवति। पुनरपि स्थूला भविष्यति। यदि सा स्वशरीरस्य स्थौल्यं न निवारयिष्यति, तर्हि पुनरपि नूतनाः रोगाः उत्पन्नाः भवेयुः। भवती स्वशरीरस्थौल्यं निवारयिष्यति चेत् सा अपि छलेन वा स्वस्थौल्यनिवारणार्थं प्रयत्नं करिष्यति। अतः अनुजायाः धनलक्ष्म्याः हितदृष्ट्या भवत्या कृशकायया भवितव्यम्'' इति।

एतत् श्रुत्वा वरलक्ष्मीः परिस्थितिम् अवगतवती। केषुचित् एव दिनेषु सा प्रयत्नेन कृशकाया जाता। एतत् दृष्ट्वा धनलक्ष्मीः अपि छलेन योगाभ्यासेन मिताहारेण च शरीरे कार्श्यतां सम्पादितवती।

विचित्रस्वभाववत्योः सहोदर्योः बन्धुत्वं बहुकालं यावत् एवमेव प्राचलत्।



# र स वा र्ताः



## ३,००० वर्षेभ्यः पूर्वतनः मानवदेहः

३,००० वर्षेभ्यः पूर्वतनानां मृगाणां पक्षिणां च अस्थिपञ्जराणि तत्र तत्र दृष्टिगोचराणि अभवन् इति विषयं वयं तदा तदा पत्रिकायां पठामः । सद्यः एवं इरान्‌देशस्य लवणखनिप्रदेशे कस्यचित् मानवस्य भौतिकशरीरं लब्धम् अस्ति । तस्य मानवस्य नेत्रे, कर्णः, नासिका इत्यादयः विकृतिं न गताः आसन् । एकस्मिन् पादरक्षा आसीत् । तस्य वामकर्णे सुवर्णनिर्मितं कर्णकुण्डलम् आसीत् । तस्य वेषभूषादिना भूगर्भशास्त्रज्ञाः तर्कयन्ति यत् - सः मानवः प्राचीनबाबिलोनियन्‌जनः अस्सिरियन्-जनः वा स्यात् इति । एषः मानवः ३,००० वर्षेभ्यः पूर्वं जीवितवान् स्यात् इति । तस्य मानवशरीरस्य समीपे केचन मृद्‌घटाः अपि उपलब्धाः सन्ति । एते घटाः क्रि.पू. १,००० तमवर्षस्य स्यात् इति भूगर्भशास्त्रज्ञानाम् अभिप्रायः ।



## प्राणापायात् रक्षितः

रुम्मेलोनिनामकः कश्चित् इङ्ग्लैण्ड्-देशस्य कोल्चेस्टर्-नगरस्य उपरि जेट्‌विमानं चालयन् आसीत् । तदा विमानम् अकस्मात् अधोमुखं जातम् । एतेन रुम्मेलोनिपार्श्वे एव उपविष्टः तस्य सहोदरः विमानात् अधः पतितः । सः प्याराचूट् धर्तुम् अपि न शक्तवान् आसीत् । रुम्मेलोनिसहोदरः ३,००० फूट्‌परिमितात् औन्नत्यात् (९१५ मीटर्) अधः पतितवान् । सौभाग्यवशात् तस्य प्राणापायः तु न जातः । अधः पतितः सहोदरः प्राणापायस्थितौ स्यात् इति चिन्तयन् दुःखेन विमानात् अवतीर्य अधः आगतवान् रुम्मेलोनि । रुम्मेलोनिमहोदयस्य दर्शनेन सन्तुष्टः तस्य सहोदरः तेन सह सानन्दं वार्तालापं कृतवान् ।



## महाकारकः बुद्धविग्रहः

सद्यःकाले हाङ्काङ्गसमीपस्थे लाण्टौव्‌नामके द्वीपे ३६ मीटर्-उन्नतस्य कांस्यनिर्मितस्य बुद्धविग्रहस्य प्रतिष्ठापनकार्यक्रमः प्राचलत् । सामान्यतः ५०,००० भक्ताः अस्मिन् कार्यक्रमे भागं गृहीतवन्तः । प्रातःकालसमये सर्वे अपि भक्ताः प्रार्थनां कृतवन्तः । तस्मिन् एव समये गवर्नर् क्रिस् पाटन् बुद्धविग्रहस्य अनावरणं कृतवान् ।




# सन्देहाः

पूर्वं विन्ध्यारण्यप्रदेशे कश्चित् मुनीश्वरः आसीत् । तस्य समीपं जनाः स्वसमस्याः परिहर्तुं गच्छन्ति स्म । स्वकष्टानि मुनिं निवेदयन्ति स्म । एवं कथनेन तेषां मनसः दुःखं निवारितं भवति स्म । अतः दिने दिने मुनीश्वरसमीपम् आगन्तॄणां संख्या वर्धते स्म ।

बहूनि दिनानि अतीतानि । जनानां समस्याः श्रुत्वा श्रुत्वा संन्यासिनः मनसि एव सन्देहाः उत्पन्नाः ।

'मया अधीतः विषयः एव भिन्नः । इदानीन्तनजनानां समस्याः एव भिन्नाः । बहुधा चिन्तितं चेदपि परस्परं सम्बन्धः एव न ज्ञायते । वस्तुस्थितिः स्पष्टं ज्ञातव्या चेत् जनानां मध्ये गत्वा परिस्थितिः द्रष्टव्या । तदा एव मम मनश्शान्तिः' इति विचिन्त्य मुनीश्वरः कदाचित् लोकदर्शनार्थं प्रस्थितः ।

मुनिः दण्डकमण्डल्वादिकं स्वीकृत्य किञ्चिद्दूरं यदा गतवान्, तदा द्वादशवर्षीयः सुन्दरः बालः कश्चित् तस्य अभिमुखम् आगतवान् । मुनीश्वरं दृष्ट्वा बालः स्नेहपूर्वकं मन्दहासं प्रकटितवान् । संन्यासी बालकस्य नामादिकं विचारितवान् । ततः संन्यासी ज्ञातवान् यत् - अहं यस्यां दिशि गच्छन् अस्मि, तस्यां दिशि एव एषः बालः अपि गच्छन् अस्ति इति ।

प्रयाणे अनिरीक्षितरूपेण बालस्य सहवासः प्राप्तः इति कारणतः संन्यासी अतीव सन्तुष्टः ।

अनन्तरम् उभौ अपि अग्रे गच्छन्तौ कस्यचित् ग्रामस्य सीमां प्राप्तवन्तौ । तावता केचन कर्मकराः तत्र आगत्य वैभवेन तयोः सत्कारं कृत्वा तौ ग्रामस्थं सुन्दरं भवनं प्रति नीतवन्तः ।

तत्र भवने संन्यासिनः बालस्य च भूरिभोजनव्यवस्था कारिता भवन-

''पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा''



स्वामिना। बालस्य निर्मलं मुखं दृष्ट्वा महता वात्सल्येन सुवर्णस्थालिकया बालकाय पायसं दत्तवान् स्वामी। तां सुवर्णस्थालिकां पूर्वं कदाचित् भवनस्य स्वामी पारितोषिकरूपेण प्राप्तवान् आसीत्।

तस्यां रात्रौ तत्रैव वासं कृत्वा अनन्तरदिने प्रातः भवनस्वामिनः अनुज्ञां प्राप्य बालः संन्यासी च ततः प्रस्थितवन्तौ। तयोः गमनानन्तरं भवने कोलाहलः आरब्धः। भवनस्वामिनः प्रियतमा सुवर्णस्थालिका न दृश्यते इत्येव कोलाहलस्य कारणम् आसीत्।

वस्तुतः सुवर्णस्थालिका अन्येन केनापि न चोरिता। अपि तु पूर्वदिने आगतेन बालकेन एव। सर्वेषाम् अपि सन्देहः आसीत् यत् - बालकः एव सुवर्णस्थालिकां चोरितवान् इति। संन्यासिनः भोजनसमये बालेन सुवर्णस्थालिका रहस्येन स्थाप्यमानं संन्यासिना अपि अवलोकितम् आसीत्। उपकारं प्राप्य अपि तत्र चौर्यं कृतवन्तं बालकं दृष्ट्वा संन्यासी अतीव खिन्नः। तथापि 'बालकः खलु चेष्टालुस्वभावः' इति बालविषये उदारतया चिन्तयन् संन्यासी सर्वेषां पुरतः तं विषयं प्रकटीकर्तुं न इष्टवान् आसीत्।

संन्यासी बालः च बहुदूरं गतवन्तौ। मध्येमार्गं महती वृष्टिः आरब्धा। उभौ अपि वृष्ट्या आर्द्रौ। ततः अनतिदूरे एव लघुदीपः दृष्टः ताभ्याम्। दीपदर्शनेन तौ ऊहितवन्तौ यत् कस्यचित् गृहं स्यात् तत्र इति। अतः तौ तस्यां दिशि गतवन्तौ। तत्र किञ्चन गृहम् आसीत्।

गृहस्य द्वारं सशब्दं ताडयन्तौ संन्यासी बालकः च उक्तवन्तौ - "आवां वृष्टिकारणतः आर्द्रौ। किञ्चित्कालं यावत् भवतः गृहस्य वितर्दिकायाम् उपवेष्टुं कृपया अनुमतिं ददातु" इति।

किञ्चित्कालानन्तरं कश्चित् कर्मकरः द्वारम् उद्घाटितवान्। संन्यासिनं बालं च गृहस्य स्वामिनः समीपं नीतवान्।

गृहस्य स्वामी तौ दृष्ट्वा कर्मकरम् उद्दिश्य - "मध्यरात्रसमये कीदृशं धर्माचरणं भवतः? भवतः विवेकः नास्ति वा?" इति तर्जितवान्।

तद्गृहस्य स्वामी महाकृपणः। तथापि सः

संन्यासिनः बालस्य च विषये किञ्चिदिव दयाबुद्धिं प्रदर्शयन्, भोजनपात्रे अवशिष्टं यत् आसीत्, तत् दत्तवान् । अनन्तरं च कर्मकरं स्मारितवान् - "वृष्टिः यदा स्थगिता भवति, तदा एतौ प्रेषयतु । यतः इदानीं कालः परिवृत्तः अस्ति । जनाः केन व्याजेन गृहं प्रविशन्ति इति न ज्ञायते" इति ।

अनन्तरं बालः भोजनपात्रेषु अवशिष्टाः ये पुलाकाः आसन्, तान् संन्यासिने दत्तवान्, स्वयं च रिक्तोदरं स्थितवान् । किञ्चित्कालानन्तरं वृष्टिः स्थगिता ।

संन्यासी बालः च पुनः प्रयाणार्थं सिद्धौ जातौ । प्रस्थानात् पूर्वं बालकः पूर्वं धनिकस्य गृहे यां सुवर्णस्थालिकां चौर्यरूपेण आनीतवान् आसीत्, तां सुवर्णस्थालिकां कर्मकराय यच्छन् उक्तवान् - "मित्र ! असमये अपि आवयोः आश्रयं दत्तवान् भवान् । भवतः स्वामी भोजनदानेन आवाम् अनुगृहीतवान् । भवतोः उपकारः अविस्मरणीयः । भवादृशाः महानुभावाः धर्मपराः दयाशीलाः च तत्र तत्र सन्ति इत्यतः एव जगति सर्वं सुष्ठु प्रचलति । एतां स्थालिकां भवतः स्वामिने ददातु । एषः आवाभ्यां क्रियमाणः अल्पः उपकारः" इति ।

बालकस्य व्यवहारेण संन्यासी आश्चर्यचकितः, कुपितः अपि ।

संन्यासिनः अन्तरङ्गं ज्ञात्वा बालकः मन्दहासपूर्वकम् उक्तवान् - "तात ! मम व्यवहारः सर्वः अपि विचित्रः इति भाति किल भवतः ? एतत् अपि मायानाटकम् एव । अस्मिन् नाटके आवाम् उभौ अपि



पात्रधारिणौ'' इति।

तदा संन्यासी उक्तवान् - ''भवतः सहवासतः मम सन्देहाः निवारिताः भविष्यन्ति इति चिन्तितवान् आसम् अहम्। किन्तु मम चिन्तनानुगुणं किमपि न जातम्'' इति।

संन्यासिनः वचनं श्रुत्वा बालकः उक्तवान् - ''भवतः सन्देहान् परिहर्तुम् एव आगतवान् अस्मि अहम्। मम कथनं शृणोतु तावत्। यः धनिकः आवां वैभवेन स्वागतीकृत्य सत्कृतवान्, सः कीर्तिम् इच्छति। तदर्थं च ऋणं कृत्वा धनिकजीवनं यापयति। तस्मात् अग्रे सर्वनाशम् अनुभविष्यति। तस्य प्रियतमा सुवर्णस्थालिका मया चोरिता इति कारणतः सः जीवने कञ्चन पाठं ज्ञातवान्। इतःपरं सः जागरूकतया व्यवहरति। एवंप्रकारेण तदीयं कुटुम्बं रक्षितवान् अहम्'' इति।

तदा संन्यासी - ''सा सुवर्णस्थालिका महाकृपणाय दत्ता खलु भवता! एतत् अपात्रदानं खलु!'' इति पृष्टवान्।

तदा बालकः उक्तवान् - ''भवतः चिन्तनं न उचितम्। मया अपात्रदानं न कृतम्। महाकृपणस्य तस्य दानबुद्धिः किञ्चिदपि नास्ति। मया सुवर्णस्थालिका दत्ता इति कारणतः तस्मिन् अवश्यं परिवर्तनं भविष्यति। सुवर्णस्थालिकायाः दर्शनेन सः कृपणः चिन्तयति - 'अल्पं भोजनं दत्तम् इति कारणतः एव मया सुवर्णस्थालिका पारितोषिकरूपेण प्राप्ता। यदि भूरिभोजनं दत्तं स्यात् तर्हि इतोऽपि उत्तमं पारितोषिकम् अलप्स्यत' इति। एतस्मात् प्रकरणात् कृपणे अपि तस्मिन् विवेकः उदितः भविष्यति। अतः इतःपरं सः अवश्यं पुण्यसम्पादनकार्याणि करिष्यति'' इति।

एतत् श्रुत्वा संन्यासी - ''इदानीं मम सर्वे अपि सन्देहाः निवारिताः अभवन्। धन्योऽस्मि'' इति यावत् उक्तवान्, तावता बालकस्य मुखे अवर्णनीया कान्तिः दृष्टा। बालकः अदृश्यः जातः।

सन्तुष्टः संन्यासी ततः पुनरपि ध्यानार्थं विन्ध्यारण्यं प्रति प्रस्थितवान्।



# प्रकृतिवैचित्र्याणि

## दुर्गन्धयुताः पक्षिणः

केचन मृगाः पक्षिणः गृहीत्वा खादन्ति । किन्तु ते शिरसि शिखायुक्तान् गाढवर्णयुक्तपिच्छवतः वन्यचटकान् खादितुं न इच्छन्ति । प्रायः ते चिन्तयन्ति यत् - गाढवर्णयुक्तानां पक्षिणां खादने रुचिः नास्ति इति । एते वन्यचटकाः न केवलं गाढवर्णपिच्छयुताः भवन्ति, अपि तु दुर्गन्धयुताः अपि भवन्ति । एते स्वनीडान् स्वच्छं न स्थापयन्ति । बहिर्गमनसमये अपि एते दुर्गन्धयुताः एव भवन्ति । अतः एतेषां ग्रहणे खादने वा मृगाणाम् अभिरुचिः न भवति ।



## पेरुतः आगतम् आलुकम्

षोडशे शतके सर् वाल्टर् रालीघ्महोदयः दक्षिणामेरिकादेशस्य पेरूनगरतः आलुकम् इङ्ग्लैण्ड्देशं नीतवान् । केषाञ्चित् वर्षाणाम् अनन्तरम् इङ्ग्लैण्ड्देशः क्षामपीडितः अभवत् । तेषु दिनेषु तत्र खादितुम् आलुकं विना अन्यः आहारः न आसीत् । तदा तत्रत्याः जनाः - 'आलुकस्य कारणतः एव क्षामः सम्भातः अस्ति' इति चिन्तयन्तः आलुकस्य खादनात् विमुखाः जाताः । सप्तदशे शतके इङ्ग्लैण्ड्देशे नियमः कृतः यत् - आलुकस्य वर्धनं निषिद्धम् इति । सामान्यतः शतस्य वर्षाणाम् अनन्तरं बवेरियानगरं गतः कश्चित् आङ्ग्लसेनाधिपतिः ज्ञातवान् यत् - बवेरियासैनिकाः कर्मकराः च प्रमुखाहारत्वेन आलुकस्य उपयोगं कुर्वन्ति इति । अनन्तरं सः सेनाधिपतिः इङ्ग्लैण्ड्देशं गत्वा पुनः आलुकस्य प्रचारं कृतवान् । १८२० तमे वर्षे अस्माकं देशे ऐदम्प्राथम्येन आलुकस्य वर्धनं नीलगिरिनामकेषु पर्वतेषु आरब्धम् ।



## शक्तिवर्धकं पर्णम्

तमिळ्नाडुप्रदेशे सिद्धपुरुषाः 'कल्तामरै' पुष्पं महामूलिकां मन्यन्ते । 'कल्तामरै' एकं विशिष्टं स्थलकमलपुष्पम् । एतस्य स्थलकमलसस्यस्य पर्णस्य वर्णः सामान्यकमलपर्णस्य वर्णः इव हरितः एव । एतस्य पर्णस्य हरितगुणः शक्तिवर्धकः इति अभिप्रयन्ति सिद्धपुरुषाः । एतस्य पर्णस्य उपरि स्थित्वा यदि आकाशं पश्यामः, तर्हि दिने अपि नक्षत्राणि दृष्टिगोचराणि भवन्ति । एतेन ज्ञायते यत् - एतस्य पर्णस्य हरितगुणः नेत्रयोः आरोग्यकरः इति । न केवलं तावत्, लोहपदार्थं कांस्यम् अपि सुवर्णरूपेण परिवर्तयितुं सामर्थ्यम् अस्ति एतस्य हरितगुणस्य इति सिद्धपुरुषाः वदन्ति ।



**Say "Hello" to text books and friends**
**'Cause School days are here again**
**Have a great year and all the best**
**From Wobbit, Coon and the rest!**



## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

### विजितां शीर्षिकाम् डिसेम्बर् - ९४ मासे प्रकटयिष्यामः ।



S.B. PRASAD



K. MADHU

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अक्टोबर् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट्-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८**

---

### 'अगस्ट्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - **ध्याने मग्नोऽहम्, एकाग्रं मे मनः ।**

द्वितीयचित्रम् - **व्यायामे सक्तोऽहं, सुदृढा मे तनुः ।**

प्रेषकः - जितेन्द्रकुमार ला. पटेल, १३२, मयूरमार्केट्, अस्तान रोड्, बारडोली - ३९४ ६०२

---

# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) - रू. ४८.००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास् - ६०० ०२६

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

अपने प्यारे चहेते के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दामामा



प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में—
आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु
—और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती

चन्दे की दरें (वार्षिक)

आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए

समुद्री जहाज़ से रु. 105.00 वायु सेवा से रु. 252.00

फ्रान्स, सिंगापुर, यू.के., यू.एस.ए.,
पश्चिम जर्मनी और दूसरे देशों के लिए

समुद्री जहाज़ से रु. 111.00 वायु सेवा से रु. 252.00

अपने चन्दे की रकम डिमांड ड्राफ्ट या मनी ऑर्डर द्वारा
'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.

